श्रीमन्मधुसूदनसरस्वतीविरचितं

# कृष्णकुतूहलम्

सम्पादकः

पण्डितश्रीहरिशङ्कर ओझाः

सम्पूर्णानन्द संस्कृत विश्वविद्यालयः
वाराणसी

SARASVATĪBHAVANA-GRANTHAMĀLĀ

[ Vol. 127 ]

# KṚṢṆAKUTŪHALAM

OF

## ĀCĀRYA MADHUSŪDANA SARASVATĪ

EDITED BY

PT. ŚRĪ HARIŚAṄKARA OJHĀ

Ex-Principal,

Śrī Sāṅgavedādarśa Sanskrit Mahāvidyālaya

( Tāmeśvaranātha )

Basti ( U. P. )




VARANASI

1990

[ Published under the Rare Texts Publication scheme of Sarasvati Bhavana Library with financial assistance Provided by University Grants Commission ]

Research Publication Supervisor—
Director, Research Institute,
Sampurnanand Sanskrit University
Varanasi.

□

Published by—
Dr. Harish Chandra Mani Tripathi
Publication Officer,
Sampurnanand Sanskrit University
Varanasi—221 002.

□

Available at—
Sales Department,
Sampurnanand Sanskrit University
Varanasi—221 002.

□

First Edition, 1000 Copies
Price Rs. 60·00

□

Printed by—
VIJAYA PRESS,
Sarasauli
Varanasi.

सरस्वतीभवन-ग्रन्थमाला

[ १२७ ]

श्रीमत्परमहंसपरिव्राजकाचार्यश्रीमधुसूदनसरस्वतीविरचितं

# कृष्णकुतूहलम्


सम्पादकः

**पण्डितश्रीहरिशङ्कर ओझाः**

प्राचार्यचरः,

श्रीसाङ्गवेदादर्शसंस्कृतमहाविद्यालयस्य

( तामेश्वरनाथः-देवरिया )

बस्ती ( उ० प्र० )





वाराणस्याम्

२०४७ तमे वैक्रमाब्दे १९१२ तमे शकाब्दे १९९० तमे ख्रैस्ताब्दे

# प्ररोचना

तपोवृद्धैः पण्डितवर्यैः **श्रीहरिशङ्कर-ओझामहोदयैः** सुविशदप्रस्तावना-पुरस्सरम् अद्यावध्यप्रकाशितं प्रकाश्यतां नीतं **कृष्णकुतूहलं** नाटकं पुरःस्थापयता मया भूयान् परितोषोऽनुभूयते। प्रथमं तु नाटकस्यास्य रचयितारः संस्कृतवाङ्मयमध्योत्तरकालीनस्येतिहासे चूडामणिभूताः परमहंसपरिव्राजकाचार्याः श्रीमन्मधुसूदनसरस्वतीमहोदयाः, येष्वद्वैतविद्या, समुत्कर्षं प्राप्तं वैराग्यम्, धारावाहिकतां नीता भगवद्भक्तिः, काव्यकौशलम्, मध्यकालीनस्य लोकभाषासाहित्यस्य कृतिषु सूक्ष्मेक्षिका, गोस्वामितुलसीदासप्रभृतीनां कवीनां विषये गुणग्राहित्वम्, इत्येतत्सर्वं वैशिष्ट्यं परस्परस्पर्द्धिभावेन समुदितमासीत्। द्वितीयं च **कृष्णकुतूहलं** नाम श्रीमद्भागवत-गीतगोविन्द-उज्ज्वलनीलमणि-प्रभृतीनां कृष्णकाव्यपङ्क्तौ कश्चन प्रदीप्ततमो मणिः, यत्र कृष्णार्पितः शृङ्गारः परमोज्ज्वलतां नीतः।

अस्मिन्नाटके नटवरवपुषः श्रीकृष्णस्य पौगण्डकैशोरलीला संग्रथिता, बहवः प्रसङ्गा अत्र नवमुद्भाविताः, भूमिका अपि नवनवा समावेशिता, राधा-माधवप्रीतिप्रसङ्ग ईर्ष्यामानद्वारेण भूयोभूयस्तीव्रतामत्रानीतः। चन्द्रावलीति नायिकाया अनुवेशनमेतदर्थमेव। कृष्णकुतूहलम् आनन्दमन्दाकिनीकाव्यस्य प्रबन्धायितं रूपम्। अनेन कारणेनास्य नाटकस्य कश्चन अतिशयो विशेषः। आपाततो वैराग्यधुरीणानाम् एतादृशशृङ्गारे गतिरिति प्रत्ययपथं नावतरति; किन्तु वैराग्यातिशयरूपतापो द्युतिरूपाया भक्तेः सद्यो जनको भवति, अभितप्त-मेव मार्दवं भजत इति।

श्रीमद्भिः ओझामहोदयैर्मनोयोगेनास्य नाटकस्य प्रस्तावना प्राणायि। अस्यां प्रस्तावनायां न केवलं ग्रन्थस्य विषयसंक्षेपः; अपि तु शास्त्ररीत्या काव्य-विवेचनमपि व्यवारीति महते मोदाय। अशीतिपरा ओझामहोदया अद्यापि विद्याव्यसनप्रजागरेण नयन्ति निशाः, शास्त्रविनोदेन धवलयन्ति च पश्चिम-वयसो दिनानीति सर्वेषां संस्कृतानुरागिणां कृते स्फूर्तिवर्धनः, आनन्दवर्धनश्च वृत्तान्तः। एवमेव जीवन्तु ते शतं समा इति।

काश्याम्
आषाढकृष्णैकादश्याम्
वि० सं० २०४७
( १९।६।१९९० ख्रैस्ताब्दे )

**विद्यानिवासमिश्रः**
कुलपतिः,
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
वाराणसी

# प्राक्कथनम्

विश्वविद्यालयानुदानायोगयोजनानुसारेण वाराणसीस्थसम्पूर्णानन्द-संस्कृतविश्वविद्यालयस्य कुलपतिमहोदयानामाज्ञया मया "कृष्णकुतूहलम्" ... नाटकस्य सम्पादनकार्यमङ्गीकृत्य अष्टसप्तत्युत्तरैकोनविंशतिशततमे (१९७८) ख्रिस्ताब्दे जूनमासस्यैकविंश्यां तिथौ तदारब्धम्।

नाटकमिदं सर्वतन्त्रस्वतन्त्रैरद्वैतसिद्ध्यादीनामद्वैतसिद्धान्तस्थापकानाम्, भक्तिरसायनादीनां भक्तिरससिद्धान्तनिरूपकाणां च बहूनां विद्वन्मान्यनिबन्धानां प्रणेतृभिः श्रीकृष्णप्रेमपरिप्लुतहृदयैः परमहंसपरिव्राजकाचार्यवर्यैः श्रीमधुसूदनसरस्वतीति प्रथितैर्मुनिवरैर्विरचितमिति प्रकृतनाटक एव प्ररोचनाङ्गकविपरिचये स्पष्टीकृतम्। तद्यथा—

**सूत्रधारः**—(**सभ्यान् समुद्दिश्य**) "भो भोः किं ब्रूत ? कोऽसावुन्नद्धपुण्यजन्मा निर्वर्णितः प्रबन्धनिर्माता, यत्कौशलविलोकनाय भगवतोऽप्येतावान्निर्बन्धः ? समाकर्णयन्तु—

षट्तन्त्रीरसनाञ्चलः कविगुरुर्योऽरुन्धतीगर्भजः
शाण्डिल्यान्वयमण्डनो द्विजमणेर्नारायणस्याङ्गजः।
शिष्यः कृष्णसरस्वतीयतिपतेराशैशवं वैष्णवः
संन्यासी-मधुसूदनः सुरगुरोर्द्वैतं स किं न श्रुतः" ?॥ इति।

अस्य पाण्डुलिपिरेका, यत्राद्यं पत्रद्वयं (पृष्ठचतुष्टयं) नास्ति, सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य सरस्वतीभवनपुस्तकालये संरक्षिता वर्तते, विश्वविद्यालयतो लब्धां यस्याश्चित्रप्रतिलिपिमाधारीकृत्य मया संपादनकार्यं प्रारब्धम्। अविकलपुस्तकोपलम्भनाय विश्वविद्यालयस्याधिकारिणो मया बहुशः प्रार्थिता अपि मां फलेग्रहिं कर्तुं न प्राभवन्नित्यासीन्मेऽन्तःखेदः, यस्यापनयनाय मया १९८० तमख्रिस्ताब्दस्य जुलाईमासे ओंकारेश्वरे '**मार्कण्डेय**' संन्यासाश्रमस्य, वाराणस्याम् '**अभय**' संन्यासाश्रमस्य च संस्थापकाः धन्ययशसः पूज्याः श्रीरामानन्दसरस्वतीस्वामिचरणास्तदानीमुत्तरकाश्यां विराजमानाः पत्रेणैकेन विज्ञापिताः। तेषामाज्ञया तदीयैः उत्तरकाशीस्थैः श्री-आत्मानन्देन्द्रसरस्वतीचरणै'र्बडौदा' स्थितप्राच्यविद्यासंस्थानस्थपाण्डुलिपेरपेक्षितांशप्रतिलिपिः ९।८।१९८० दिनाङ्के

मत्सकाशं प्रापिता। येन महत्यपि मेऽन्तःप्रमोदसीमा विभग्नाऽभूत्। खेदश्चायं तत्क्षणमपनीय स्मृतिविषयतां नीतः। प्रागसम्भावितमप्यविकलं सम्पादनं सुशकमभूत्। अतोऽत्रास्माभिः श्रीस्वामिचरणास्तेषां सहयोगिनः, वडौदास्थ-प्राच्यविद्यासंस्थानाध्यक्षाश्च तेषामेव सौजन्याञ्चितौदार्यभावोद्भूतैरन्तर्मोद-प्रसूनैः साऽऽभारं सबहुमानञ्च समभ्यचर्यन्ते। खण्डितांशस्येयं प्रतिलिपिरप्य-शुद्धिबहुला। तेन अस्यांशस्यापि शुद्धतया सम्भावितः पाठो मूलभागे लिखितः। प्रतिलिपिगतश्च "बडौदापुस्तके" इति संकेतेन "ब० पु०" इति संकेतेन वा पादटिप्पण्यामङ्कितः। एतदाधारेण खण्डितांशं पूरयित्वा लेखनकार्ये समापित-प्राये कलिकातास्थैः श्रीकृष्णकुमारकानोडियामहोदयैस्तत्रत्यैः एसियाटिक-सोसाइटीस्थपाण्डुलिपेरादितः षोडशपृष्ठानां मध्यतो द्विपञ्चाशत्पत्रस्य पृष्ठयोश्च चित्रप्रतिलिपिरपि ४।९।१९८० दिनाङ्केऽस्मत्सकाशं प्रापिता। एतदाधारेण तावत्यंशेऽशुद्धस्थलेऽभ्यूहितानां पाठानां प्रायेण दृढीकरणं जातम्। तत्र तत्र पाठभेदानाञ्च "ए० पु०" (एसियाटिकसोसाइटीस्थपुस्तके) इति संकेतेन पादटिप्पण्यामुल्लेखः कृतः। एवमेनया चित्रप्रतिलिप्याऽप्यसाधारण्येनोपकृत-मित्यतिपरिश्रम्यास्मभ्यमेनां सूपलम्भितवतः श्रीकानोडियामहोदयान् ससाधु-वादं हर्षपूर्णहृदयोल्लासिताभिश्शुभाभिराशीर्भिः संवर्द्धयामः। एसियाटिकसमि-त्यध्यक्षमहाभागांश्च धन्यवादैः समर्चयामो येषां सौदार्येणेयं प्रतिलिपिरुप-लब्धाऽभूत्। सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्येयं पाण्डुलिपिः नृसिंहोपासक-सामराजपण्डितसूनुना माधवपण्डितानुजेन ढुंढिराजेन लिखिता इति, "नृसिंहो-पासकसामराजपण्डितानां सूनुना ढुंढिराजेन माधवपण्डितानुजेन लिखितमेतत्" इत्येवमन्ते तल्लेखाज्ज्ञायते। लेखनसमयनिर्देशश्च तत्रेत्थं वर्तते, यथा— "संवत् १७६ समये विलम्बिसंवत्सरे आश्विने मासि विजयदशमीदिने" इति। तत्र "संवत् १७६" इत्यत्र अन्ते '२' इत्यङ्को लेखकप्रमादालिखित इत्यनु-मानतो निश्चेतुं शक्यते। यतो ज्यौतिषशास्त्रानुसारेण प्रभवादिनामानः षष्टि-संख्याः संवत्सराः पर्यायेण आवर्तन्ते। वर्षारम्भे यः संवत्सरो भवति, तन्नाम्नैव वर्षान्तं यावत् संकल्पादौ व्यवहारो भवति। तेषां क्रमश्चेत्थम्—

प्रभवो विभवः शुक्लः प्रमोदश्च प्रजापतिः।
अङ्गिराः श्रीमुखो भावो युवा धाता तथैव च॥
ईश्वरो वहुधान्यश्च प्रमाथी विक्रमो वृषः।
चित्रभानुः सुभानुश्च तारणः पार्थिवो व्ययः॥
सर्वजित् सर्वधारी च विरोधी विकृतः खरः।
नन्दनो विजयश्चैव जयो मन्मथ-दुर्मुखौ॥

हेमलम्बो विलम्बश्च विकारी सर्वरीप्लवः।
शुभकृत् शोभनः क्रोधी विश्वावसुपराभवौ ॥
प्लवङ्गः कीलकः सौम्यः साधारणविरोधकौ।
परिधावी प्रमादी च आनन्दो राक्षसो नलः ॥
पिङ्गलः कालयुक्तश्च सिद्धार्थो रौद्रदुर्मती।
दुन्दुभी रुधिरोद्गारी रक्ताक्षः क्रोधनः क्षयः ॥ इति।
( बृ० ज्यौ० सा० )

तथा हि अस्मिन् वर्षे ( २०३७ तमे विक्रमाब्दे ) श्रीमुखनामा संवत्सरोऽस्ति। अयं प्रभवादिक्रमेण सप्तमोऽस्ति। विलम्बिसंवत्सरश्च द्वात्रिंशः। एवञ्च विलोमक्रमेण गणनया वर्तमान २०३७ तमविक्रमाब्दात् २७५ वर्षेभ्यः (३५+६०+६०+६०+६० = २७५) प्राक् विक्रमाब्दस्याष्टादशे शतके १७६२ तमे विक्रमाब्दे विलम्बिनामा संवत्सर आसीदिति निश्चीयते। यद्यप्यस्मिन् शतके ततोऽपि ६० वर्षेभ्यः प्राक् १७०२ तमे विक्रमाब्देऽपि विलम्बिसंवत्सर आसीत्, तथापि १७६ इत्यङ्कानां सामञ्जस्यं तत्र न संभवति, तस्मात् १७६२ तमो विक्रमाब्दस्तदनुसारेण १७०५ तमः ख्रिस्ताब्दोऽस्याः पाण्डुलिपेर्लेखनसमय इति सुनिश्चितं वक्तुं शक्यते। ग्रन्थकर्तुश्च समयः १६०० विक्रमाब्दात् १७०० विक्रमाब्दं यावदित्युपलब्धैः प्रमाणैर्निश्चित एव। रचना चास्य परिणते वयस्येव कृता, इत्यप्यनुमानादध्यवसीयते। एवञ्च रचनाकालादशीतिवर्षाभ्यन्तर एवास्याः पाण्डुलिपेर्लेखनकाल इत्यसंदिग्धम्। प्रमाणयिष्यते चैतत्कविपरिचयप्रसङ्गे भूमिकायाम्।

अस्यां पाण्डुलिपौ आद्यं पृष्ठचतुष्टयं नास्तीति प्रागवोचम्। अविकलपुस्तकान्तरालाभात् तावतांशेन वर्जितमेवेदं प्राक् सम्पादितम्। यतोऽत्र 'नान्दी' तथा प्ररोचनाया आद्यः कियांश्चिदंशो नास्ति। एकस्य प्ररोचनाश्लोकस्य चतुर्थपादेनात्रोपक्रमः। यथा—"श्रीमत्कृष्णकथासुधेह विबुधैरास्वादनीया न किम् ?"[1] इति। तस्मादेतावतो भागस्य सम्पादनं १९८० ख्रिस्ताब्दस्यागस्तमासे प्राप्ताया वडोदास्थपाण्डुलिपेः प्रतिलिपिमाधारीकृत्य पश्चाज्जातम्। इयं पाण्डुलिपिरशुद्धिबहुला त्रुटिपूर्णा च। अतो यथामति सर्वा अशुद्धीः संशोध्य सतर्कतयाऽल्पाल्पास्त्रुटींश्चापूर्य परममूलपुस्तकस्थतया संभावितः शुद्धः

---

१. द्वितीयपृष्ठलिखितटिप्पण्यनुसारं खण्डितांशस्य पूर्तिः १९८० ख्रिस्ताब्दस्यागस्तमासेऽभवदत इदानीमविकलमिदं पुस्तकं सम्पादितमभूत्।

पाठ उद्धृतः। स एव चात्र मूलरूपेण लिखितः। सर्वत्र संशोधनपरिवर्तनादिस्थले मूलपुस्तकस्थः (आधारीभूतपाण्डुलिपिस्थः) पाठः पादटिप्पण्यां दत्तः। परिवर्तनादिकारणञ्च तत्रैव विवृतम्। तत्र सामान्याशुद्धीनामुद्धारो यथा—उद्धरा, उझंति, शंत्रु, रुचिः, कद्रीश इत्येवमादीनामशुद्धानामसंगतार्थानाञ्च स्थाने उद्धुरा, उज्झन्ति, सन्तु, रुचौ, कदीश इत्येवमादयः शुद्धाः संगतार्थाश्च पाठा उद्धृताः। क्वचिच्च मूले पदमेव त्रुटितम्, येन च्छन्दोभङ्गोऽर्थासंगतिश्च। यथा प्रथमेऽङ्के नन्दनन्दनवर्णनप्रस्तावे षट्त्रिंशे श्लोके—

यस्यारातिवधाध्वरे प्रसृमरक्रोधोऽनलः पूतना-
प्रागाज्याहुतिरुद्धतामररिपुश्रेणीसमित्सम्भृतिः ।
कंसाद्याः पशवः स्वतः क्रतुभुजां मन्त्रः करौ स्रुक् स्रुवौ
दुष्कीर्तिर्द्विषतां तु धूमपटली साधुप्रमोदः फलम् ॥ (१।३६)

अत्र श्लोके तृतीयचरणे "स्रुक् स्रुवौ" इत्यस्य स्थाने मूलपुस्तके "स्रुवौ" इत्येतावन्मात्रमस्ति, तत्स्थाने "स्रुक् स्रुवौ" इत्येवं पाठ उद्धृतः। अन्यत्र च १।५५ श्लोके "नोद्गीते मणिपञ्जरोदरशुकैरङ्गीकृते झंकृतैर्वन्यैस्तु न रत्नदीपनिचये किंत्वौषधीनां द्युतौ" इति मूलपुस्तके लिखितम्। अत्र रेखाङ्कितस्थलेऽशुद्धिरर्थासंगतिश्छन्दोभङ्गश्चेति त्रयो दोषा आपतन्ति। अतोऽत्रैवमुद्धारः कृतः, यथा—

नोद्गते मणिपञ्जरोदरशुकैरङ्गीकृते झङ्कृते
वन्यैस्तैस्तु न रत्नदीपनिचये किन्त्वौषधीनां द्युतौ। इति।

अत्र "वृन्दाटवीचेतश्चमत्कारभू" इति वृन्दावनवर्णनप्रसङ्गे "नगरे मणिपञ्जरोदरशुकैरुद्गीते मनो न रज्यते, अपि तु वृन्दावने वन्यैस्तैर्झङ्कृते मनो रज्यते" एवं "नगरे रत्नदीपनिचये मनो न रज्यते, अपि तु वृन्दावने औषधीनां द्युतौ मनो रज्यते" इत्यनुषङ्गः। अत्र 'झंकृतैः' इत्यस्य स्थाने 'झंकृते' इति संशोधनं "वन्यैः" इत्यतोऽग्रे "तैः" इत्यस्य सन्निवेशश्च उक्तदोषत्रयपरिहाराय औचित्यात् कृतः। एवं षष्ठेऽङ्के पञ्चचत्वारिंशे (४५) श्लोके उक्ष्णां वर्णने प्रथमचरणे "स्वच्छाच्छस्थस्य स्फटिकशिखरभ्रमरभ्राजमानैः ककुद्भिः" इति मूलपुस्तकस्थः पाठो नितरामसंगतोऽस्ति, तत्स्थाने "स्वच्छस्निग्धस्फटिक-

शिखरभ्राजमानैः ककुद्भिः" इत्येवं पाठः संशोधितः[१]। एवं तृतीयेऽङ्के पञ्चविंशे श्लोके श्रीराधिकाया विरहतापशमनाय कृतानां शीतोपचाराणां वैफल्यवर्णने—

नवकिसलयलक्ष्मीः काननान्तेष्वनन्ता
कमलदलबिसश्रीराशयेष्वम्भसां च।
विपणिषु घनसारो शीरपाटीरसंपत्
क्षयमगमदमनुष्याः केन सैन्यं पुनः स्यात् ॥

इति मूलपुस्तके पाठोऽस्ति। अत्र चतुर्थपादपाठोऽसंगतार्थ इति तत्स्थाने "क्षयमगमदमुष्याः केन शैत्यं पुनः स्यात्" इति परममूलपाठ उन्नीतः। एवमेव तृतीयेऽङ्के चत्वारिंशत्तमे श्लोके श्रीकृष्णेन राधाङ्गानां वर्णने—"वर्णः स्वर्णान्यधरवद्दीप्तयः पद्मरागाः" इति मूलपुस्तके पाठः। अत्रार्थासंगतिश्छन्दोभङ्गश्चेति तत्स्थाने "वर्णः स्वर्णद्युतिरधरवद्दीप्तयः पद्मरागाः" इत्थं पाठोऽभ्यूहितः। समञ्जसतया निर्दोषतया च अयमेव पाठो ग्रन्थकृदभिमत इत्यसंशयं वक्तुं शक्यते। अत्रैव चतुर्थपादे "पुण्यस्थानम्" इति मूलपुस्तकस्थः पाठोऽप्यनौचित्यात् त्यक्तः। तत्स्थाने "पण्यस्थानम्" इत्येवं पाठ औचित्यादभ्यूहितः। पादत्रये पण्यद्रव्याणामुपमानतया वर्णनाच्चतुर्थे च "मदनवणिजः" इति मदनस्य वणिक्त्वेन रूपणात्[२]। एवमन्येष्वपि बहुषु स्थलेषु 'स्वल्पमधिकं वा परिवर्तनादिकमौचित्यात्कृतम्। यत्र यत्र परिवर्तनादिकं कृतम्, तत्र तत्र सर्वत्र मूलपाठष्टिप्पण्यां लिखितः, परिवर्तनकारणञ्च सयुक्तिकं संक्षेपेण स्पष्टीकृतमिति, तत एव पाठकानां विदुषामवगतं भवेत्। प्राकृतं कदाचिल्लोकभाषा आसीत्; परन्त्वद्यत्वे

---

१. षष्ठेऽङ्के पञ्चचत्वारिंशः श्लोकस्त्वेवम्—

स्वच्छस्निग्धस्फटिकशिखरभ्राजमानैः ककुद्भिः
शृङ्गैरङ्गीकृतमरकतोद्भेदरूपैरुपेताः ।
अङ्गैस्तुङ्गैस्तुहिनकिरणास्कन्दिभिः किं न्वभिख्या-
मुक्षाणोऽमी हिमशिखरिणः सर्वशः खर्वयन्ति ॥ इति ।

१. पूर्णश्लोकस्त्वेवम्—

वर्णः स्वर्णद्युतिरधरवद्दीप्तयः पद्मरागा
दन्ता मुक्ताः स्मितलवलसत्कान्तयश्चन्द्रकान्ताः ।
नेत्रद्वन्द्वद्युतिरिह महानीलरत्नालिरेतद्
पण्यस्थानम् मदनवणिजो राधिकायाः किमङ्गम् ॥ (३।४०)

तदर्थज्ञानं संस्कृतच्छायामन्तरा नैव सुलभम्। अतः सर्वत्र प्राकृतस्थले तत्सन्दर्भानन्तरमेव तस्य संस्कृतच्छायाऽपि कोष्ठान्तर्गततया मूलभाग एव मयाऽनूद्य संयोजिता। टिप्पण्यां 'मू० पु०' इति संकेतेन 'मूलपुस्तक' इति शब्देन वा सम्पूर्णानन्दसंस्कृतविश्वविद्यालयान्तर्गतसरस्वतीभवनस्थं हस्तलिखितं प्राचीनतमं पुस्तकमवगन्तव्यम्। अग्रे च नातिदीर्घायां भूमिकायामस्य नाटकस्य एतद् रचयितुश्च विषये यथाऽऽवश्यकं समीक्षितम्, अतस्तत्तद्विशेषाऽवगतये भूमिकाऽवश्यं पठनीयेति निवेदयता विरम्यते।

# प्रस्तावना

अथेदं "कृष्णकुतूहलम्" नाम नाटकं विषयीकृत्य किमपि प्रस्तूयते। अस्य प्रणेतारः श्रीमत्परमहंसपरिव्राजकाचार्यवर्या विश्वविश्रुतसर्वतन्त्रस्वतन्त्रताकाः सर्वतोमुखीनालौकिकप्रतिभाशालिनः श्रीमधुसूदनसरस्वत्यः। एते हि एकतः सिद्धान्तविन्दु-सिद्धान्तकल्पलतिका-संक्षेपशारीरकव्याख्या-अद्वैतरत्नरक्षण-अद्वैतसिद्धि-गूढार्थदीपिका ( गीता-व्याख्या )-प्रस्थानभेदप्रभृतिभिर्महानिवन्धैरौपनिषदाद्वैतसिद्धान्तं श्रीमच्छङ्करभगवत्पादसरणिमनुसृत्य प्रातिष्ठिपन्; अपरतश्च तदविरोधेनैव समन्वयपथेन "नैष्कर्म्यमप्यच्युतभाववर्जितं न शोभते ज्ञानमलं निरञ्जनम्" इत्यादिस्मृतिवचांस्यनुरुन्धाना भगवद्भक्तिरसायन-श्रीमद्भागवत-व्याख्या ( परमहंसप्रिया ) भक्तिभाष्यनिरूपण-शाण्डिल्यसूत्रटीकादिग्रन्थरचनया भक्तिमार्गसिद्धान्तानपि स्फुटं प्रत्यपीपदन्। अपि च भगवतः श्रीकृष्णस्यातिरहस्यमधुरलीलामयं "कृष्णकुतूहलम्" नामेदं नाटकं विरचय्य सहृदयभक्तजनेभ्यः स्वयं भूयोऽनुभूतं भक्तिरसामृतसारास्वादसुखं च प्राचीकशन्।

कालिन्दीपुलिनोदरे धावता केनापि नीलेन महसा चमत्कृतलोचनानामेतेषां तद्भावविगलिते हृदये आभीरवारनारीभिः समास्वाद्यमानमाधुर्यो वृन्दावनलीलानायकः श्रीकृष्ण एव सच्चिदानन्दघनब्रह्मरूपो भक्तिरसीभावाय आलम्बनीभूतो ज्ञानभक्तिरसयोः सामरस्यं प्रकाशयति। एतत् तथ्योपष्टम्भकावेतेषामेव हृदयोद्गीर्णौ श्लोकौ यथा—

ध्यानाभ्यासवशीकृतेन मनसा तन्निर्गुणं निष्क्रियं
ज्योतिः किञ्चन योगिनो यदि परं पश्यन्ति पश्यन्तु ते।
अस्माकं तु तदेव लोचनचमत्काराय भूयाच्चिरं
कालिन्दीपुलिनोदरे किमपि यन्नीलं महो धावति॥

( गीतागू० दी० अ० १३ )

बृहदारण्यनिविष्टं विलुठितमाभीरवारनारीभिः।
सत्यचिदानन्दघनं ब्रह्म नराकारमालम्बे॥ इति।

( अद्वैतरत्नरक्षणम् )

पूर्वश्लोके 'तदेव' इति पदेन पूर्वानुभूतम् ( नयनगोचरीभूतम् ) इत्यर्थो व्यज्यते। ( एतेनाग्रे वक्ष्यमाणमेतत्कर्तृकं श्रीकृष्णदर्शनं प्रमाणितं भवति ) प्रमितं चैतद् "रसो वै सः", "रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इत्यादि श्रुतिभिः। एभिराचार्यचरणैरपि भक्तिरसायने उक्तम्—

परमानन्द आत्मैव रस इत्याहुरागमाः।
शब्दतस्तदभिव्यक्तिप्रकारोऽयं प्रदर्शितः॥ इति।

तमिमं भक्तिरसमेव सहृदयानधिकारिणोऽनुभावयितुं श्रीकृष्णलीलाऽमृत-परिपूर्णं "कृष्णकुतूहलम्" नाम नाटकम् एतैर्न्यबन्धि। यथोक्तमत्रैव प्रथमेऽङ्के प्ररोचनायाम्—"श्रीमत्कृष्णकथासुधेह विबुधैरास्वादनीया न किम्?" इति। एतेनानुबन्धचतुष्टयमपि व्याख्यातम्।

**कविपरिचयः—**

यद्यप्येतेन विदुषा अन्येषु निबन्धेषु क्वचिदपि स्वगोत्रस्य पित्रोर्वा नामोल्लेखो न कृतः, तथाप्यस्मिन् नाटके—

रङ्गं प्रसाद्य मधुरैः श्लोकैः काव्यार्थसूचकैः।
रूपकस्य कवेराख्यां गोत्राद्यपि स कीर्तयेत्॥ (सा० द० ६।२८)

इति नाटकीयसम्प्रदायानुरोधादत्र सूत्रधारमुखेन स्वगोत्रस्य पित्रोः श्रीकृष्ण-लीलारूपाभिधेयविषयानुरोधाच्च कृष्णमन्त्रदीक्षागुरोश्च नामानि कीर्तितानि। तथा हि प्रथमेऽङ्के प्ररोचनायाम्—

**सूत्रधारः**—( *सभ्यान् समुद्दिश्य* ) भो भोः! किं ब्रूत? कोऽसावुन्नद्धपुण्य-जन्मा निर्वर्णितः प्रबन्धनिर्माता यत्कौशलविलोकनाय भगवतोऽप्येतावान्नि-र्बन्धः? समाकर्णयन्तु—

षट्तन्त्रीरसनाञ्चलः कविगुरुर्योऽरुन्धतीगर्भजः
शाण्डिल्यान्वयमण्डनो द्विजमणेर्नारायणस्याङ्गजः।
शिष्यः कृष्णसरस्वतीयतिपतेराशैशवं वैष्णवः
संन्यासी-मधुसूदनः सुरगुरोर्द्वैतं स किं न श्रुतः?॥ इति।

अनेन श्लोकेन च षट्शास्त्रव्याख्याता, कवीनामाचार्यः शाण्डिल्य-गोत्रीयो द्विजश्रेष्ठस्य नारायणस्यारुन्धत्यां भार्यायामुत्पन्नः पुत्रः, शैशवादारभ्य विष्णुभक्तिपरायणः, श्रीकृष्णसरस्वतीनाम्नो यतीन्द्रस्य शिष्यः, द्वितीयो वाक्पति-

रिति ख्यातः श्रीमधुसूदनसरस्वती यतिवरोऽस्य नाटकस्य निर्माता इति स्फुटमभिहितं भवति। **"शाण्डिल्यान्वयमण्डनः"** इत्यनेन चास्य मूलपूर्वजः सरयूपारीणब्राह्मण इत्यप्यभिव्यज्यते। अयं श्रीकृष्णसरस्वती विश्वपालकः साक्षाच्छ्रीकृष्ण एवेति तदानीन्तनैर्धीरैः स्तूयते, तथा हि तत्रैव ( **नेपथ्ये** )—

कृष्णः पुष्णाति यो विश्वं सोऽयं कृष्णसरस्वती।
श्रूयन्ते यद्गुरुष्वेवं धीराणामुद्धुरा गिरः॥ इति।

अयमेवास्य श्रीकृष्णमन्त्रदीक्षागुरुः श्रीकृष्णसाक्षात्कारायोपासनाविधिं ध्यानविधिं चाख्यायैनं तत्साधने प्रावर्तयदित्यग्रे स्फुटीभविष्यति। अस्यापि गुरुः ( श्रीमधुसूदनसरस्वत्याः परमगुरुः ) वृन्दावनधामस्थः श्रीमुकुन्दसरस्वती आसीदित्यप्यत्रैवमुक्तम्। यथा—

**सूत्रधारः**—अये ! परमगुरुष्वप्येवमेव। तथा हि—

न निस्तारप्रस्तावनमपि विना विष्णुभजनं
जनानां सत्यादावधिकलिकुतस्त्यं तदुदियात्।
इति स्वित् स्वां भक्तिं श्रवणमननध्यानविधिना
मुकुन्दः कर्मन्दी प्रकटयति वृन्दावनगतः॥ इति।

यद्यपि श्रीमधुसूदनसरस्वतीविरचितानामन्येषाम् अद्वैतसिद्धि-सिद्धान्तबिन्दु-भक्तिरसायनादिशास्त्रीयग्रन्थानां भूमिकासु तैस्तैर्गवेषकैर्भूमिकालेखकैर्विद्वद्भिरस्य संन्यासाश्रमगुरवः श्रीविश्वेश्वरसरस्वत्यो विद्यागुरवः श्रीमाधवसरस्वत्यः श्रीरामतीर्थाश्चासन्, इत्येव—

श्रीरामविश्वेश्वरमाधवानां प्रसादमासाद्य मया गुरूणाम्।
व्याख्यानमेतद्विहितं सुबोधं समर्पितं तच्चरणाम्बुजेषु॥
( गीता-गूढार्थदीपिका )

इत्यादिग्रन्थकृदुपज्ञश्लोकप्रमाणैः साधितम्। तथा "पितरश्चास्य पुरोदनपुरन्दाराचार्या आसन्" इत्युक्तम्, तथापि तद्रचितस्यास्य "कृष्णकुतूहलम्" नाम्नो नाटकस्य अदर्शनेन एतत्प्रामाण्योपष्टम्भेन गवेषणाभावादेव तैरेवमुक्तम्। अस्याप्यवलोकनेन तु एतद्विषये प्रसिद्धकिंवदन्तीभिः कल्याणस्य भक्ताङ्के यतिचक्रचूडामणि–श्रीकरपात्रस्वामिचरणलिखितभक्तिसुधाद्वितीयभागे, अन्यत्र च लिखितैस्तथ्यैश्च एवं निर्धार्यते यदस्य श्रीकृष्णोपासनासम्बन्धिनी गुरुपरम्परा वृन्दावने आसीत्। तत्र श्रीकृष्णसरस्वत्योऽस्य गुरवः, श्रीमुकुन्दसरस्वत्यश्च परमगुरव आसन्। अस्य माता अरुन्धती पिता च नारायण

आसीत्, यस्य "पुरोदनपुरन्दराचार्य:" इत्युपाधिरासीदिति। "अन्यः कोऽपि मधुसूदनोऽस्य कर्ता" इति तु नैव प्रत्येतुं स्वीकरोति चेतः, भक्तिरसायनोक्तरसानुगुण्येन अस्य निबन्धनात्। प्रदर्शयिष्यते चैतदग्रे नाटकविषयसमीक्षाधिकरणे।

एवञ्च प्रकृतनाटकस्थप्रमाणसहकृतपूर्वोपलब्धप्रमाणाधारेण एवं ज्ञायते यद् अस्य मूलपुरुषो राममिश्रो नाम वङ्गदेशीयब्राह्मणानां वंशोद्भवो वैदिको ब्राह्मण आसीत्, माता चास्य अरुन्धती, पिता च पुरोदनपुरन्दरेत्युपाधिमान् नारायणमिश्रो गोत्रेण शाण्डिल्य आसीत्। तस्य श्रीनाथचूडामणि-यादवानन्दन्यायाचार्य-कमलनयन-वागीशगोस्वामीत्यभिधानाश्चत्वारः पुत्रा बभूवुः। तत्र यादवानन्दन्यायाचार्यः प्रतापादित्यस्य राज्ञः सभाचूडामणितां प्राप। राज्ञा चासौ "अविलम्ब-सरस्वती"त्युपाधिनाऽलञ्चक्रे। तृतीयः कमलनयनो बाल्ये पितुः सकाशादेव काव्य-व्याकरणादि अधीतवान्। प्रकृष्टप्रतिभाशालितया दशवर्षदेशीयस्यैवास्याद्भुता कवित्वशक्तिराविरासीत्। अयं तदानीं नवद्वीपे ख्यातिमतः पण्डितप्रकाण्डाच्छ्रीहरिरामतर्कवागीशमहाशयात् कृत्स्नं न्यायशास्त्रमतिप्रौढ्या अधीतवान्। न्यायशास्त्रस्योद्भटपण्डिताः श्रीगदाधरभट्टाचार्या अस्य सहाध्यायिन आसन्। ये हि तत्त्वचिन्तामणेर्दीधितिटीकामपि दीधिति-प्रकाशिकयाऽटीकयन्। किन्तु कमलनयनेन स्वप्रतिभया एतेऽप्यतिशिश्यिरे। बाल्य एवायं विरक्तप्रकृतितया उत्कृष्टप्रतिभया च वेदान्तप्रौढ्या वादिविजयद्वारा अद्वैतमतस्थापनपुरस्सरं परमपुमर्थसाधनाय कृतदृढनिश्चय आसीत्, अतः पितुरनुमत्या काशीमागत्य तदानीन्तनप्रसिद्धमीमांसक-श्रीमाधवसरस्वतोसकाशान्मीमांसाशास्त्रस्य तथा श्रीरामतीर्थादद्वैतवेदान्तस्य दर्शनान्तराणाञ्च कार्त्स्न्येनाध्ययनं विधाय सुदृढवैराग्यस्तयोः परामर्शेन वैराग्येण, विद्यया, आत्मवित्तया च वित्तान् श्रीविश्वेश्वरसरस्वतीति प्रथितान् यतिवर्यानुपसद्य संन्यासदीक्षादानाय तानुपच्छन्दयामास, तेषामाज्ञयाऽऽत्मनः शिष्यत्वयोग्यतां प्रमाणयितुं गीतोपरि शङ्करभगवत्पादाभिमताद्वैतसिद्धान्तप्रतिपादकं स्वीयाद्भुतोत्कृष्टप्रतिभाव्यञ्जकं कमपि निबन्धं लिखित्वाऽदर्शयच्च, तेन प्रीतास्त एनं संन्यासेन दीक्षयन्तो मधुसूदनसरस्वतीतिनाम्नाऽलमकार्षुः। त एवैते अस्माकं चरितनायकाः श्रीमधुसूदनसरस्वत्यः। एतैर्हि सिद्धान्तबिन्दु-वेदान्तकल्पलतिका-अद्वैतसिद्ध्यद्वैतरत्नरक्षणप्रभृतयो बहवो विद्वन्मान्या अद्वैतसिद्धान्तप्रतिपादकास्तर्कपूर्णाः प्रतिपक्षमुखमुद्रणप्रवणा महानिबन्धा व्यरचिषत। अखिले भारते भ्रमणं कृत्वा वादिनो विजित्य सर्वत्र अद्वैतसिद्धान्तस्य विजयवैजयन्त्यः समुच्छ्रायिताः। अभिव्यञ्जितश्चायमर्थस्तत्र तत्र निबन्धेषु। यथा अद्वैतसिद्धावादौ—

श्रद्धाधनेन मुनिना मधुसूदनेन संगृह्य शास्त्रनिचयं रचितातियत्नात् ।
बोधाय वादिविजयाय च सत्त्वराणामद्वैतसिद्धिरियमस्तु मुदे बुधानाम् ॥

अन्ते च—

इह कुमतिरतत्त्वे तत्त्ववादी वराकः
प्रलपति यदकाण्डे खण्डनाभासमुच्चैः ।
प्रतिवचनममुष्मै तस्य को वक्तुविद्वान्
नहि रुतमनुरौति ग्रामसिंहस्य सिंहः ॥ इति ।

अद्वैतरत्नरक्षणे च—

निर्जित्य प्रतिपक्षान् द्वैतधियो दुष्टतार्किकम्मन्यान् ।
अद्वैततत्त्वरत्नं रक्षितुमयमुद्यमः क्षमः स्यान्नः ॥
अद्वैतरत्नरक्षायां तात्त्विका एव यामिकाः ।
अतो न्यायविदः स्तेनान्निरस्यामः स्वयुक्तिभिः ॥ इति ।

अत एव कदाचित् स्वजन्मभूमिदर्शनाय नवद्वीपं गतेष्वेषु "तार्किकप्रवरो गदाधरोऽपि कातरोऽभूत्, तर्कवागीशोऽपि चकम्पे" इति किल कथयन्ति लोकाः । यथा—

नवद्वीपं समायाते मधुसूदनवाक्पतौ ।
चकम्पे तर्कवागीशः कातरोऽभूद् गदाधरः ॥ इति ।

दृढतरशास्त्राभ्यासस्य अलौकिकाद्भुतप्रतिभायाश्च बलेनैते वादिनो विजित्यान्तर्हृदये गर्वाङ्कुरगर्भया कयाचन आत्मतुष्ट्या स्पृश्यमाना इवालक्ष्यन्त । प्राक्तनपुण्यप्रभावादेकदा श्रीकृष्णप्रेरणया कश्चन वृद्धो दिगम्बरः श्रीकृष्णसरस्वतीनाम्ना विदितः परमहंसो महात्मा एकान्ते आविर्भूय एतानुवाच— "भवान् आत्मानम् असङ्गं निर्लिप्तं च वदति, किन्तु अन्यान् पराभूय किं भवतो मनो गर्वेण न स्पृश्यते ? मुखं वा हर्षोल्लसितं न जायते ? स्वपराभवदशायामपि किं भवत एवमेव प्रसन्नमुखता संभाव्यते" ? इति । क्षणं विरम्य पुनरपि तेनोक्तम्—"भवता श्रीकृष्णशरणमाश्रयणीयम्, तदुपासनयाऽयं हृद्गतो गर्वमलोऽपनीयताम् । तत्त्वतः परमानन्दस्तु भवता आनन्दकन्दश्रीवृन्दावनचन्द्रचरणेष्वेव लप्स्यते" इति । दिगम्बरमहात्मन एतद्वचनश्रवणसमकालमेवैतेषां हृदये तन्द्रायितो बहुजन्मसञ्चितः श्रीकृष्णप्रेमसंस्कारो जजागार । सद्य एव विगलितहृदया रुद्धकण्ठा एते महात्मनश्चरणावगृह्णन् । स महात्माऽप्येभ्यः श्रीकृष्णमन्त्रं दत्त्वा जपोपासनाध्यानविधिं चोपदिश्य गतः । एते च तदुपदिष्टविधिना श्रीकृष्णदर्शन—

मुद्दिश्य जपोपासनाध्यानपरायणा बभूवुः। मासत्रयानन्तरं किञ्चिदुद्विग्नमानसा-श्चङ्क्रमणार्थं बहिर्निर्गतानेनान् पुनरपि स महात्माऽक्षिविषयीभूय प्राबोधयत्—"स्वामिन्! भक्तजना अविचलभावेन साधनभजनतपश्चर्याभिर्बहूनि जन्मानि नयन्ति, ततः कदाचिदतिकृच्छ्रेण तेषु विरला एव भगवतो दर्शनस्य सौभाग्यं लभन्ते, भवांस्तु मासत्रयेणैवोद्विग्नमना जातः। अपरिच्छिन्नं तत्त्वं परिच्छेत्तुं न शक्यते। तद्भवान् वृन्दावनं गच्छतु, तत्र भगवतः कृपापात्रतां यास्यति" इत्युक्त्वाऽन्तर्हितः। ततः परमेते वृन्दावनं गत्वा तीव्रतस्तीव्रतमभावेनाहर्निशं साधनतत्परा अभूवन्। फलितं चैषां पुण्यैः। भगवतोऽनुग्रहशक्त्याऽनुगृहीता एते एकस्मिन् दिवसे सायं कालिन्दीतटे चङ्क्रमणव्यापृता अधरसुधया मुरली-मापूरयन्तं त्रिभुवनमोहनममृतवर्षिण्या कृपादृष्ट्या विलोकयन्तं नन्दनन्दनमक्षि-विषयीकृत्य जन्मसाफल्यमलभन्त। तामेव भगवतः कृपादृष्टिं स्मरन्त एते प्रार्थयन्ते, यथा—

मुक्तेरप्यतिदुर्लभा हिमगिरिप्रस्यन्दिमन्दाकिनी-
धारातोऽप्यतिशीतलाऽतिमसृणा चान्द्रान्मयूखादपि।
वाञ्छातोऽप्यतिविस्तृता विषयिणां त्वत्पादचिन्तापर-
स्वान्तादप्यतिनिर्मला मयि कृपादृष्टिस्तवास्तां प्रभो!॥

(कृ० कु० ७।४०)

किञ्च त एव दिगम्बरपरमहंसमहात्मानः श्रीकृष्णसरस्वत्यो यतिपतयः श्रीमधुसूदनसरस्वती-मुनेः श्रीकृष्णमन्त्रदीक्षागुरवोऽस्मिन् भगवतः श्रीकृष्ण-स्यातिरहस्यमधुररसलीलाप्रकटनपरे नाटके **"शिष्यः कृष्णसरस्वतीयतिपतेः"** इति गुरुत्वेनोक्ताः। यतः श्रीकृष्णदर्शनौपयिककृष्णमन्त्रप्रदानामेतेषामेवात्र गौरवं गौरवमावहति। परमगुरवः श्रीमुकुन्दसरस्वत्यश्च वृन्दावनस्थाः श्रवण-मनन-ध्यानविधिना परब्रह्मरूपेण श्रीकृष्णमुपासाञ्चक्रुरित्यपि सम्प्रदायप्रदर्शना-यात्र लिखितम्। (कृ० कु० १।१०)

यतिचक्रचूडामणयोऽनन्तश्रीविभूषिता आराध्यचरणाः श्रीकरपात्रस्वामि-महाराजा भक्तिसुधाया द्वितीयखण्डे नवाधिकशततमे १०९ पृष्ठे लिखन्ति यत्—कदाचित् श्रीमधुसूदनसरस्वत्यो वृन्दावनधाम गतवन्तः। तत्र कश्चिद् ब्राह्मणश्चिरकालाद्भगवतः कृष्णस्य दर्शनार्थं तपस्यन्नासीत्। भगवांस्तं स्वप्ने समादिशद् यन्मधुसूदनसरस्वतीसकाशं गच्छ, तत्र दर्शनं भविष्यति। ततः स मधुसूदनसरस्वतीसकाशं गत्वाऽपश्यद् यद् भगवान् श्रीकृष्णः तस्य भिक्षापात्रादन्नं गृहीत्वा भुङ्क्ते इति। स स्वयं ततो 'भगवत्प्रसाद' इत्यन्नं जिघृक्षन् यदा

श्रीमधुसूदनसरस्वत्या "संन्यासिनोऽन्नं निषिद्धम्" इत्युक्त्वाऽवार्यत, तदोक्तवान्— "अहं तु भगवतः प्रसादं ग्रहीतुमिच्छामि, न तु संन्यासिनोऽन्नमिति"[१]।

एतेनेदं ज्ञातुं शक्यते यत् श्रीमधुसूदनसरस्वत्याः श्रीकृष्णे श्रीकृष्णस्य च श्रीमधुसूदनसरस्वत्यां कियान् अन्तरङ्गतमः प्रेम आसीदिति। ईदृशे भगवत्प्रेमाम्बुधौ नित्यनिमग्नस्य आनन्दपरिपूर्णे हृदि रागद्वेषयोर्गर्वाङ्कुरस्य वा क्वावकाशः ? कथं वा सहजनिर्वृत्तिजन्या मुखकान्तिर्भावान्तरेण परिभूयेतेति।

वस्तुतः श्रीकृष्णमेव तन्मधुरलीलारसमाधुर्यं समास्वादयितुमेतैर्नाटकमिदं विरचितम्। अत एव सर्वप्रथममभिनीयमानेऽस्मिन् नाटके तत्कौशलविलोकनाय समुत्कण्ठितस्य भगवतः श्रीकृष्णस्यापि भक्तपारवश्यं प्रकटयत इव साग्रहं प्रवृत्तिरासीदिति वर्ण्यते। यथा प्रथमेऽङ्के **सूत्रधारः—( सभ्यान् समुद्दिश्य )** भो भोः किं ब्रूत ? "कोऽसावुन्नद्धपुण्यजन्मा निर्वर्णितः प्रबन्धनिर्माता, **यत्कौशलविलोकनाय भगवतोऽप्येतावान्निर्बन्धः ?"** इति। अत्र "यत्कौशलविलोकनाय भगवतोऽप्येतावान्निर्बन्धः" इति सन्दर्भेण भगवतः श्रीकृष्णस्य काश्यां बिन्दुमाधवविग्रहेण विराजमानस्य स्वप्नप्रेरणया[२] साग्रहं तदवलोकनाय प्रवृत्तिः

---

१. श्रीकरपात्रस्वामिचरणा एकामपरामपि किंवदन्तीमुदाहरन्ति, यथैते (श्रीमधुसूदनसरस्वत्यः) श्रीकृष्णदर्शनोद्देश्येन वृन्दावने श्रीगोपालसहस्रनाम्नां चत्वारि पुरश्चरणान्यन्वतिष्ठन्, परन्तु श्रीकृष्णदर्शनं नालभन्त। ततः काशीमागत्य तत्र भैरवमुपासाञ्चक्रिरे। आशुतोषः स प्रत्यक्षीभूय "वरं ब्रूहि" इत्यवोचत्। ततस्ते श्रीकृष्णदर्शनं मे भूयादिति स्वाभिलाषं प्रकटयाम्बभूवुः। तदा श्रीभैरवस्तान् भस्मीभूतांश्चतुरः पर्वतान् दर्शयित्वोवाच—"चतुर्भिः पुरश्चरणैस्ते चत्वारः पापपर्वता भस्मीभूताः, इदानीं निष्पापस्त्वं पुनर्वृन्दावने गोपालसहस्रनाम्नां पुरश्चरणमनुतिष्ठ, ततः श्रीकृष्णदर्शनं लप्स्यसे" इति। ततस्ते वृन्दावनं गत्वा तथोपासनया श्रीकृष्णदर्शनमलभन्त इति।

२. स्वप्नप्रेरणा चास्मिन्नेव नाटकेऽभिहिता। यथा, नान्द्यन्ते सूत्रधारः— "अलमतिविस्तरेण! अद्य तावत्कमलालया कुचकलशाङ्गरागकुरङ्गनाभिपूरेण सकलदिविषन्मौलिमन्दारमालालङ्कारनीलमहोत्पलेन वाराणसीवरवर्णिनीकण्ठाभरणीकृतसुरतरङ्गिणीमुक्तालतेन्द्रनीलाङ्कुरतरलेन जगदानन्दकन्देन भगवता बिन्दुमाधवेन स्वप्नान्तराले समाज्ञया समनुगृहीतोऽस्मि, यद् "भवद्भिः "कृष्णकुतूहलम्" नाम प्रबन्धमभिनयद्भिः स्वीयभुवनरञ्जनाभिधानोचितमाचरणीयम्" इति। ( पृ० ४)

स्फुटमभिहिता। **"आ शैशवं वैष्णवः"** इत्येवं कविपरिचये लेखाज्ज्ञायते यदेते बाल्यादेव विष्णुभक्ता आसन्निति; परन्त्वेतन्मते विष्णुः श्रीकृष्णो वा निरवच्छिन्नं निरावरणं ब्रह्मैव। तथोक्तम्—

एकं तेजस्त्रिधा यद्वत्सूर्यमण्डलरश्मिभिः।
एकं ब्रह्म तथा तद्वद्विष्णुमायात्मभिर्मतम्॥ (ह०ली० १२।१२)

इति हरिलीलाश्लोकटीकायाम्—"तत्रानवच्छिन्नं चैतन्यं विष्णुः", "मायावच्छिन्नमीश्वरः", "अविद्यावच्छिन्नमात्मा" इति। किञ्च ज्ञानवद्भक्तावप्ययं गुणदोषौ नेति मन्यते, भक्तेर्ब्रह्मरूपत्वस्वीकारात्। तथा हि तत्रैव एकादशस्कन्धस्यैकविंशश्लोकस्य "कर्मणि ज्ञानभक्त्योर्न" इत्यंशव्याख्याने "तौ गुणदोषौ कर्मणि स्तः, न तु ज्ञानभक्त्योः"। तत्र हि सर्वस्य ब्रह्मभावादभिन्नत्वम्। यथोक्तम्—

ब्रह्मार्पणं ब्रह्महविर्ब्रह्माग्नौ ब्रह्मणा हुतम्।
ब्रह्मैव तेन गन्तव्यं ब्रह्मकर्मसमाधिना॥ इति। ( गीता ४।२४ )

भक्तिरिहोत्तमा—

सर्वभूतेषु यः पश्येद् भगवद्भावमात्मनः।
भूतानि भगवत्यात्मन्येष भागवतोत्तमः॥ इत्यत्रोक्ता।

अनयोस्तावत्प्रत्येकमेकात्मरूपत्त्वेन भेदाभावान्न तावद्दोषः। अत एव भेदप्रतियोगिकाभेदाभावान्न गुणोऽपि। एतदेवोक्तं मूलश्लोकेन—

न मय्येकान्तभक्तानां गुणदोषोद्भवा गुणाः।
साधूनां समचित्तानां बुद्धेः परमुपेयुषाम्॥ इति।

अत्र ज्ञानभक्त्योरेकात्मरूपतास्वीकारेण ज्ञान्युत्तमभक्तयोः समानैव स्थितिरित्युक्तं भवति। तथा हि "ज्ञानिनः परमहंसा एवोत्तमया भक्त्या विभूषिताः श्रीपरमहंसा भवन्ति" इति, तथा "परमहंसानां मुनीनाममलात्मनां भक्तियोगविधानार्थम्" इति श्लोकप्रसङ्गे अनन्तश्रियः श्रीकरपात्रस्वामिचरणा व्याचक्षते। एतेषां भक्तावप्यद्वैतस्य अक्षुण्णतया न गौराङ्गसम्प्रदायाचार्यैर्विचारसाम्यम्; अपि तु "भक्तौ द्वैताभासमपाकर्तुमप्येतेषां भक्तिरसायन–परमहंसप्रियाख्य–श्रीमद्भागवतटीका–वोपदेवीयहरिलीलामृतटीकादिषु प्रयासः" इति तत्तत्स्थलनिरीक्षणेन स्फुटमेव प्रतीतिविषयो भवति विवेचकानाम्। अत एवैते

सिद्धान्तकल्पलतिकायाम्—"एवं यथोक्तविष्णुधर्माचरणाद् विष्णुलोकगमनमेव मोक्ष इति वैष्णवाः" इति द्वैतवादिवैष्णवमतं पूर्वपक्षे निक्षिप्य प्रत्याचख्युः।

तत्रैव सिद्धान्तपक्षमुदाहरन्तः कथयन्ति—"औपनिषदास्तु भगवता नीलाचलनायकेन नारायणेनानुगृहीता निरतिशयानन्दबोधरूप आत्मा एव अनाद्यविद्यानिवृत्त्युपलक्षितो मोक्ष इत्याचक्षते" इति (सि० क० ल० पृ० १०)। तत्रैव—"किञ्च भगवतो नीलाचलनाथस्य भजनाञ्जननिर्मलीकृतज्ञानचक्षुः प्रत्यक्षेणैवाज्ञाननिवृत्तिमनुभवति" इति (पृ० ११३)। एतेन "अज्ञाननिवृत्युपलक्षितो निरवच्छिन्नचैतन्यात्मसाक्षात्कार एव उत्तमाया विष्णुभक्तेः फलम्, स एव च विष्णुः" इति स्फुटमभिहितं भवति। इत्येवम् एतेषां भक्तिज्ञानयोः सामरस्योपपादनकौशलं कस्य सहृदयस्य न चेतश्चमत्कुर्वीतेति दिङ्मात्रमत्र संकेत्यैतेषां स्थितिकालचर्चोपक्रम्यते।

**स्थितिकालः—**

एते स्वयं स्वस्थितिकालविषये कुत्रापि कमपि संकेतं न दत्तवन्तः। अतः 'कस्माद् वत्सरादारभ्य कं वत्सरं यावदेतेषां स्थितिकालः' इति यद्यपि सुनिश्चितं वक्तुं न शक्यते, तथापि षोडश्याः ख्रीष्टशताब्द्याः पश्चिमार्द्धः, सप्तदश्याः पूर्वार्द्धः (**सप्तदशी-विक्रमशताब्दी वा**) एतेषां स्थितिकाल इति विद्वद्भिर्निर्धार्यते। तत्र प्रमाणानि चैवमुपस्थाप्यन्ते। यथा—

(१) "एते गदाधरभट्टाचार्यस्य सहाध्यायिनस्तत्समकालीनाः" इति सर्वैरपि गवेषकैरङ्गीकृतमेव। गदाधरभट्टाचार्याणां समयश्च सप्तदश्याः ख्रिस्तशताब्द्या मध्यभागः, तत्पूर्वः सन्निहितः कालो वेति कलिकाता संस्कृतपरिषत्प्रकाशितमुक्तिवादभूमिकायां श्रीमतां कालीपदतर्काचार्यमहाशयानां लेखादवसीयते। अत्र निर्दिष्टः समयः सप्तदशख्रिस्तशताब्द्याः पूर्वार्द्ध एव भवितुं शक्नोति। गदाधरसमकालिकता चैतेषां किंवदन्त्याधारेण प्रसिद्धाभिः कथाभिः परम्परया स्मर्यमाणेन—

नवद्वीपं समायाते मधुसूदनवाक्पतौ।
चकम्पे तर्कवागीशः कातरोऽभूद्गदाधरः॥

इति श्लोकेन च सुप्रसिद्धैव। एतेषां वाक्पतित्वं च प्रकृतनाटकेऽपि कविपरिचयपद्ये 'सुरगुरोर्द्वैतम्' इति विशेषणेन समर्थितं भवति।

(२) "महात्मनस्तुलसीदासस्य समकालिका एते" इत्यपि एतन्निर्मिततत्प्रशंसापद्येन परम्परया स्मर्यमाणेन प्रमाणितं भवति। महात्मातुलसीदासः

एकत्रिंशदुत्तरषोडशशततमे ( १६३१ ) विक्रमाब्दे चैत्रशुक्लनवम्यां श्रीरामचरितमानसस्य रचनामारभ्य त्रयस्त्रिंशदधिकषोडशशततमे ( १६३३ ) विक्रमाब्दे मार्गशीर्षशुक्लपञ्चम्यां पूर्णतामनयत्। ततः स काशीमागत्य रामचरितमानसकथां श्रावयन् भक्तजनानानन्दयत्। पुस्तकं च काशीस्थपण्डितानदर्शयत्। "अपभ्रंशभाषया लिखितमेतन्न पुण्यजनकम्" इत्यधिक्षिप्तश्च खिन्नमनाः—

हरिहर यश सुरनरगिरा वरणहिं सन्त सुजान।
हांडी-हाटक चारु रुचि रांधे स्वाद समान॥

इति भाषापद्येन सह पुस्तकमिदं श्रीमधुसूदनसरस्वतीसकाशं प्रैषयत्।

श्रीमधुसूदनसरस्वत्यश्च तदुत्तरे—

आनन्दकानने ह्यस्मिञ्जङ्गमस्तुलसीतरुः।
कवितामञ्जरी यस्य रामभ्रमरचुम्बिता॥

इति प्रशंसापद्यं लिखित्वा पुस्तकं प्रत्यावर्तयन्। प्रशंसापुरस्सरं तेषां समर्थनेन श्रीरामचरितमानसं सर्वैरपि काशीस्थपण्डितैः समादृतमभूत्। किंवदन्त्याऽनया महात्मनस्तुलसीदासस्य समकालिका एते इति प्रमाणितं भवति। अस्या घटनायाः समयश्च निर्माणानन्तरं पञ्चवर्षाभ्यन्तरवर्ती एव भवेत्। तेन १६३४-१६४० विक्रमाब्दमध्ये ( **खिस्ताब्द १५७९-१५८३ मध्ये** ) काश्यां श्रीमधुसूदनसरस्वतीनां स्थितिः प्रमाणिता भवति। महात्मना तुलसीदासेन लिखितमेकं "वाल्मीकिरामायण" पुस्तकमपि वाराणसीस्थ-सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य सरस्वतीभवनपुस्तकालये वर्तते। यत्र लेखनकालः १६४१ विक्रमाब्द इति लिखितं वर्तते। एतेन १६३४ तमविक्रमाब्दतः १६४१ तमविक्रमाब्दयोर्मध्यकाले महात्मना तुलसीदासेन श्रीमधुसूदनसरस्वतीनां सम्पर्कोऽभूदित्यनुमातुं शक्यते। किञ्चैतयोर्भक्तिज्ञानविषयिणी मान्यताऽपि तुल्यैवेति एतयोरेतद्विषयकग्रन्थपरिशीलनेन ज्ञायते। रामचरितमानसस्य अन्तिमं दोहापद्यं प्रकृतनाटकस्यैकेन पद्येन ( ६।५३ ) सपरिष्कारमर्थतोऽनूद्यते, ततश्चैवं प्रतीयते यद् रामचरितमानसनिर्माणानन्तरं परिणते वयसि श्रीमधुसूदनसरस्वतीभिरिदं कृष्णकुतूहलं नाटकं विरचितं स्यादिति। उभे पद्येऽपि अधस्तादुद्ध्रियेते। यथा—

कामिहि नारि पिआरि जिमि लोभिहि प्रिय जिमि दाम।
तिमि रघुनाथ निरन्तर प्रिय लागहु मोहिं राम॥ (७।१३०)

लुब्धस्येव सुवर्णं स्मरविवशस्येव सुन्दरी नर्म।
क्षुधितस्येव सदन्नं माधव ! तव नाम मे भूयात् ॥ (कृ०कु०६।५३)

एतेनाप्येतेषां षोडश-सप्तदशख्रिस्तशताब्द्योः सन्धिकालेऽवस्थानं प्रमाणितं भवति।

(३) ख्रिस्तषोडशशताब्द्यां माध्वसम्प्रदायाचार्यश्रीव्यासतीर्थैर्निबद्धस्य न्यायामृतस्य अद्वैतसिद्धावेभिः कृतेन खण्डनेन[1] द्वाविंशत्युत्तरषोडशशततमे (१६२२) ख्रिस्ताब्दे चिदम्बरक्षेत्रे द्वासप्ततिवर्षसम्मिते वयसि "चिदम्बरमिदं पुरम्[2]" इति श्लोकपाठपूर्वकं शिवसायुज्यमुपेयुषां परिमल-सिद्धान्तलेश-न्यायरक्षामण्यादिग्रन्थप्रणेतॄणां श्रीमदप्पय्यदीक्षितानामेतैः स्वकीये अद्वैतसिद्धिनामके महानिबन्धे "सर्वतन्त्रस्वतन्त्रैर्भामतीकार–कल्पतरुकार–परिमलकारैः" इत्येवं ससम्मानोल्लेखेन च स एव ख्रिस्तषोडशशताब्द्याः पश्चिमः सप्तदशशताब्द्याः पूर्वो भाग एतेषां स्थितिसमय इति प्रमाणितं भवति।

(४) टोडरमलस्य लिपेर्निर्णयाय कदाचित् सम्राजोऽकबरस्य सभायां काशीस्थपण्डितमण्डलीप्रतिनिधितया गता एते सभायामामन्त्रितैः सर्वैः पण्डितैः—

---

१. कल्याण-भक्ताङ्क, पृ० ३८८।

१. तथा हि देहत्यागात्पूर्वं तेन पठितः सार्द्धः श्लोकः—

चिदम्बरमिदं पुरं प्रथितमेव पुण्यस्थलं
सुताश्च विनयोज्ज्वलाः सुकृतयश्च काश्चित् कृताः।
वयांसि मम सप्ततेरुपरि नैव भोगे स्पृहा
न किञ्चिदहमर्थये शिवपदं दिदृक्षे परम् ॥
आभाति हाटकसभा नटपादपद्मो
ज्योतिर्मयो मनसि मे तरुणारुणोऽयम्।

एवं श्लोकार्द्धं एव तेषां वाग्विलीनोऽभवत्। तत उत्तरार्द्धं तेषां पुत्रेण पूरितम्। यथा—

नूनं जरामरणघोरपिशाचकीर्णा
संसारमोहरजनीविलयं प्रयाता ॥ इति।

( कल्याण-भक्ताङ्क ( गीताप्रेस गोरखपुर )–पृ० ३८८ )

"वेत्ति पारं सरस्वत्या मधुसूदनसरस्वती ।
मधुसूदनसरस्वत्याः पारं वेत्ति सरस्वती" ॥

इति श्लोकेन अभिनन्दिता अभूवन्, इति प्रसिद्धचा "अकबरसम्राजः समकालिका एते" इति सिद्धचति । सम्राजोऽकबरस्य समयश्च १५५६ तमख्रिस्ताब्दात् १६०५ तमख्रिस्ताब्दं यावदस्ति ।

एतैः प्रमाणैः श्रीमधुसूदनसरस्वतीमुनिवर्याणां स्थितिकालः षोडश्याः ख्रिस्तशताब्द्याः पश्चिमार्द्धभागः, सप्तदश्याश्च पूर्वार्द्धभागः, तदासन्ना सप्तदशी विक्रमशताब्दी वेति निर्धार्यते । निर्णीतं चैतदेव पूर्वैरपि गवेषकैरित्यलं पिष्टपेषणेन ।

**एभिर्निर्मिता ग्रन्थाः—**

श्रीमधुसूदनसरस्वतीमुनिवरैर्निर्मिता द्वादश-ग्रन्था उपलब्धाः सन्ति । ते च (१)—सिद्धान्तबिन्दुः, (२) वेदान्तकल्पलतिका, (३) संक्षेपशारीरकव्याख्या, (४) अद्वैतसिद्धिः, (५) गूढार्थदीपिका ( गीता-व्याख्या ), (६) अद्वैतरत्नरक्षणम्, ( ७ ) प्रस्थानभेदः, ( ८ ) महिम्नस्तोत्र-व्याख्या ( हरि-हरोभयपक्षीया ), (९) भक्ति-रसायनम् (उल्लासत्रयात्मकं प्रथमोल्लासस्थग्रन्थकृदुपज्ञव्याख्योपेतम्), (१०) हरिलीलामृत-टीका ( विवेकनाम्नी ), (११) श्रीमद्भागवतस्य परमहंसप्रियाख्या व्याख्या, ( इयं व्याख्या सम्पूर्णे श्रीमद्भागवते लिखिता; परन्तु आद्यस्यैकस्यैव जन्माद्यस्येति श्लोकस्य उपलब्धा काशीस्थचौखम्बासंस्कृतग्रन्थमालायां श्रीमधुसूदनसरस्वतीकृत-टीकोपेतहरिलीलामृतेन सह प्रकाशिता), (१२) कृष्णकुतूहलं नाटकम् (प्रकृतम् ) इति ।

एतदतिरिक्ता अन्येऽपि ये दश-ग्रन्था जर्मनदेशीयथीयोडोर (THEODOR) महाशयैः स्वकीये बृहत्सूचीपत्रे निर्दिष्टास्तेषां नामानि यथा— (१) आत्मबोधटीका, ( २ ) आनन्दमन्दाकिनी, ( ३ ) भक्तिसामान्यनिरूपणम्, ( ४ ) वेदस्तुति-टीका, ( ५ ) ऋग्वेद-जटाद्यष्टविकृतिविवरणम्, ( ६ ) राज्ञां प्रतिबोधः, (७ ) शाण्डिल्यसूत्रटीका, ( ८ ) शास्त्रसिद्धान्तलेशटीका, (९) सर्वविद्यासिद्धान्तवर्णनम्, (१०) रासपञ्चाध्यायी-टीका इति । एषु रासपञ्चाध्यायीटीका, वेदस्तुति-टीका इति ग्रन्थद्वयं श्रीमद्भागवतव्याख्यान्तर्गतमपि वैशिष्टयात् पृथङ्निर्दिष्टम् । आचार्यश्रीमधुसूदनसरस्वतीमुनिवर्यविरचिता एते दश-ग्रन्थाः सम्पूर्णश्रीमद्भागवतीया परमहंसप्रियाख्या व्याख्या च अद्यावधि नोपलब्धाः,

केवलं सूचीपत्र एव नामतोऽवलोकिताः। एषां ग्रन्थरत्नानामुपलब्धये सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयेन अन्यैश्च संस्कृतसंस्थानैः सद्यः प्रयत्नो विधेयः।

**प्रत्यङ्कं कथासारः—**

## प्रथमेऽङ्के

"अमीषामुपर्युपरि प्रख्यातसंख्यावतामनुरञ्जनं कथं भवता विधेयम्?" इति प्रश्नं "गोपवेषस्य भगवतः श्रीकृष्णस्य विहरणमेव कृष्णानुरागवता मया सम्प्रयुक्तं रसज्ञायाः परिषदः समनुरञ्जनं करिष्यत्येव" इति समाधाय सूत्रधारो नृत्यप्रवर्तनाय समाहूतां स्वप्रेयसीं नटीं प्रसाधनरहितां विलोक्य खिन्नमनास्तत्कारणमपृच्छत्। पृष्टा च सा "अप्रसाधनस्य हृदये ज्वलन्ती चिन्तैव कारणम्" इत्युक्तवती। 'कीदृशी सा'? इति पुनरनुयुक्तया तयोक्तम्—"एकैव मे दुहिता बहुप्रियासु आसक्तस्य नटाधिपसूनोः करस्था जाता, तस्मिंश्च राज्ञः क्रूरदृष्टिः। अस्य किमप्यनिष्टमेव फलम् इत्याशङ्क्य मे हृदयं चिन्तया दूनम्"इति। ततः सूत्रधारस्तां सान्त्वयन्नाह–"प्रिये! मुधैव ते चिन्ता, तस्य सन्तु नाम बहवः प्रियाः; किन्तु मे सुता माधवस्य राधेव सर्वाभ्योऽप्यधिकं सौभाग्यं लभमाना प्रियतमैव भविष्यति। राज्ञोऽपि भयं नास्ति; यतोऽद्भुतानन्त-शक्तिशाली नटाधिपः स्वपक्षरक्षणक्षमो नन्दनन्दनवत् कमप्यधिकमानन्दयति, अपि कंसं निहन्ति च" इति। अस्मिन्नेव अवसरे कंसहिताशंसी सदन्तको नाम कंसप्रतिनिधिस्तत्रागत्य तं निरभर्त्सयत्। सूत्रधारे नट्या सह नृत्यमनिर्वर्त्यैव भयात्पलायिते सदन्तकः पुरतः श्रीकृष्णचरणरजः स्पर्शेन अर्जुनीभावान्मुक्तं तत्केलिकाननं वृन्दावनं स्तुवन्तं धनपतिपुत्रं नलकूवरं पश्यन् "अतिसुन्दरः कोऽयम्"? इति निपुणं निभालयति। नलकूवरस्तु यदा भावावेशात् तरून् लतांश्च सम्बोध्य तान्—

> अत्युत्तमेषु कुसुमेषु रसालसालि-
> र्दुःस्था प्रियः पिककलोऽवतु माधवो वः।
> कंसोऽप्ययं व्रजतु वंशविवर्द्धनं यो
> धर्मेण राज्यसुखलब्धिनिबद्धबन्धुः ॥ (कृ०कु०१।२७)

इत्येवं श्लिष्टैर्वाक्यैराशीर्भिर्योजयति, तदा सदन्तकः "कंसोऽप्ययं व्रजतु" इत्यादि तद्वाक्यमसहमानः "आः पापपुरुषापसद! मादृशि पुरो विराजमाने भोजराजस्याहितं वाञ्छसि?" इत्येवं यदा तमाक्षिपति, तदा तेनापि "अयं

कंसो वंशविवर्द्धनं व्रजतु" इत्येवं स्तुत्यभिप्रायेण प्रयुक्तं मद्वाक्यं दौर्हृद्येनान्यथा-गृह्णंस्त्वं कटूक्तिभिरकारणमेव मां तुदसि" इत्याद्युक्तिभिः प्रत्याक्षिप्तः सदन्तको मनस्यचिन्तयत्—"ब्रह्मादिस्तुतिभिः प्रसन्नस्य विष्णोर्भाविचेष्टितं यन्नारदोऽकथयत्, तदेवायमपि गरिष्ठमनिष्टं वक्रोक्तिभङ्ग्या कथयति" इति। एवं चिन्तया दुर्मनायमानः सदन्तको नलकूबरमपृच्छत्—"कस्ते समुपास्यः" ? सोऽकथयत् —"यो जगदाराध्यः स एव"। पश्य तस्यास्माकमुपास्यस्य पूतनामोक्षः, शकटच्छद्मनो दैत्यस्य वात्यारूपस्य वृत्रासुरस्य च वधः, अर्जुनवृक्षयोर्भङ्गः, कालियदमनम्, ब्रह्मसम्मोहनम्, इन्द्रजयः, शैलोद्धरणमित्यादीनि बाल्यविक्रीडितान्येव कीदृक् चमत्कारीणि सन्ति।

अग्रेऽपि कंसादीनामुद्धतामररिपूणां प्रशमनं तेन लीलयैव विधेयम्। किञ्च स्वपक्षस्य रक्षणाय तदानन्दाय च—दावानलकवलनम्, गोप्रचारणम्, सखिभिः सह विविधक्रीडाविनोदः, गोपकन्यकानां व्रतपूरणम्, वंशीगीतेन सर्वेषां प्रेमाकुलीकरणम्, रासक्रीडा इत्येवमादीनि अनन्तानि मोदमयानि क्रीडनानि तेन नित्यं विधीयन्ते। एवं स्वोपास्यं वर्णयति नलकूबरे नृत्यन्मयूरव्यञ्जितं सानुचरस्य श्रीकृष्णस्यागमनं विज्ञाय स्वयमपि तदनुचरेषु सहभावाय निर्गते सदन्तकः ससहचरस्य श्रीकृष्णस्यालौकिकरूप-प्रेम-सौलभ्य-प्रागल्भ्य-प्रभुत्त्व-धैर्यौदार्यादिवशीभूतहृदये नतं प्रशंसन् तद्दर्शनेन स्वजीवनस्य साफल्यं मन्यमान आह—

"मरणं वरमेतस्मात् कंसान्नाशंसितं हितम्।
इतो मृतं यदमृतं मतं तस्मात् सुखं विषम्॥ इति। (कृ० कु०१।४२)

तदधुना बालकबुद्ध्यैनमवधीर्य स्वकार्यपराङ्मुखं दुर्वृत्तं कंसं सर्वमेतद्वृत्तमा-वेदयामि। यतः स्वामी सर्वभावेन सेवनीयः" इत्युक्त्वा गतः।

ततः ससहचरस्य श्रीकृष्णस्य वृन्दावनशोभावर्णनप्रसङ्गे—"सर्वासामपि लतानां मध्ये माधविका-माधवसम्मोदराधिका जयति" इति श्रीदामवचनं श्रुत्वा सरोमाञ्चावहित्थं श्रीकृष्णः—"सखे ! सम्यग् ब्रवीषि। माधवसम्मोदराधिकेत्यमी नवरमणीया वर्णाः कर्णाभ्यर्णमायान्तः कं जनं न रञ्जयन्ति। कथं वाऽमीषु मधुरिम-शीतिम-सुकुमारिमाणाः समुल्लसन्ति" इति राधिकां प्रति गूढमनुरागम-भिव्यञ्जन् ससंवरणम् स्तवकावस्थितालिगीतं स्तौति। श्रीदामा च सगूढस्मितम्—"प्रियसख ! कथं नवीनरमणीहितेयं न स्यात् सुमनःसङ्गिना मधुसूदनेन उद्गीय-माना वर्णावली"। एतेन सन्दर्भेणात्र श्रीराधां प्रति श्रीकृष्णस्य पूर्वरागरूपं

बीजम् उपन्यस्तम्। एवं प्रबल-महाबल-सुबलातिबलश्रीदामादिभिः सहचरैः सह वनशोभावर्णनपुरस्सरं वनविहारं कुर्वतः श्रीकृष्णस्य "सेव्येयं पररमणी-वनान्तलक्ष्मीः" इत्यतिबलवचनं श्रुत्वा—"भो भो वयस्याः! वनवर्णनाप्रसङ्गे-नापि पररमणीसेवामुपदिशन्तो मामुपहसन्ति भवन्तः" ? इति प्रश्ने श्रीदामादिभिः "सखे ! कथमुत्तमपदार्थे परकीयबुद्ध्या स्वस्मिन्नुपहासारोपः" ? इति प्रतिबन्द्यै-वोत्तरिते श्रीकृष्णः सस्मितं कथयति—"वयस्य ! यद्येवम्, तर्हि भोजराजोपभोग्यं छत्रचामरादिकमपि मामकं भवेत्" इति। ततः सर्वे "सखे ! भवेदेवमपि सकल-साधूनामभिमतं हि तत्" इत्येवं व्याहरन्तः सप्तमाङ्कगर्भाङ्कस्थकंसवधनामकस्य कथाबीजमप्युपन्यासयन्। अन्ते च—"गोकुलकन्यकानां कात्यायनीपूजोपकरणं खण्डलड्डुकादि च वयं भुञ्जीमहि" इति ब्रुवाणो भद्रमुखः ( गर्भमहर्षेः पुत्रः विदूषकस्थानीयोऽन्तरङ्गः सहचरः श्रीकृष्णस्य ) सर्वान् हासयन् निर्गतः। ( अत्र श्रीकृष्णं पतिं प्राप्तुं गोकुलबालानां कात्यायनी-पूजनचर्चया तासां कृष्णेऽनुरागोऽ-भिव्यज्यते )। एवमस्मिन्नङ्के नन्दनन्दनस्य श्रीकृष्णस्य सानन्दं वनविहारवर्णनेन **"सानन्दनन्दनो"** नामायं प्रथमोऽङ्कः।

## द्वितीयेऽङ्के

वृन्दावनं प्रविष्टयोः सखीसमेतयोः राधाचन्द्रावल्योर्वनस्थवृक्ष-लतादिषु पशुपक्ष्यादिषु च श्यामलिमानमेव सस्पृहमालोचयन्त्योः कृष्णे हार्दिकोऽनुरागः प्रकाशितो भवति। अन्यासामपि पूर्वाङ्कचर्चितकात्यायनी-पूजनप्राप्तवराणां गोपबालानां श्रीकृष्णावलोकनाय तत्रावस्थानम्। अस्मिन्नेव क्षणे श्रीकृष्णस्य मुरलीध्वनिं श्रुत्वा सोत्कण्ठास्ताः सर्वा अपि एकान्ते तिष्ठन्ति। ततः सखिसमेतः श्रीकृष्णः प्रविशति। सखिसमाजे भद्रमुखमपश्यन् यदा स "कथमसौ भद्रमुखो विलम्बते" ? इति श्रीदामानं पृच्छति, तदानीमेव भीतः स भद्रमुखः पलायमानस्तत्रागच्छति। श्रीकृष्णेन भयकारणं पृष्टश्च स "पृथिव्यां सद्योऽनिष्टफलावहाया महोत्पातिकाया अवलोकनाद्भीतोऽस्मि" इति तमुवाच। कीदृशी सा ? इति पृष्टश्च, सरोमाञ्चं व्याचष्टे, यन्मया एका सौदामिनी दृष्टा, यस्याः "पृथिवीलग्नं सशोणाम्भोजं रम्भायुगलम्, तदुपरि एकं पुलिनम्, ततः परं शून्यम्, तदुपरि हेमकुम्भौ, तत्परः स्वर्णाभश्चन्द्रस्तदुपरि मधुपराजी" इत्येवम् अत्यद्भुतानि अङ्गानि सन्ति। श्रुत्वा च सर्वे हसन्ति। भद्रमुखेन निर्दिष्टमार्गाश्च सकौतुकं तं प्रदेशं गच्छन्ति, यत्र कृष्णदर्शनलालसायामनङ्गसेना-कमलमाला-चम्पककलिका-कामाङ्कुराप्रभृतयो गोपरमण्यः पुष्पावचयं कुर्वाणा आसन्। श्रीकृष्णश्च सस्पृहं ताः प्रत्येकमन्वर्थनामतया वर्णयति।

ततः श्रीकृष्णः ससहचरस्तत्र गच्छति, यत्र चन्द्रावली राधा च स्वस्वसखीवर्गेण सह पुष्पावचयं कुरुतः। तत्र पूर्वं चन्द्रावली श्रीकृष्णं दृष्ट्वा तद्रूपमाधुरी-मोहिता स्वसखीषु निजाधीरतां प्रकटयति। राधया च वामाक्षिस्पन्दनं सूचयित्वा तत्फलं पृष्टा सखी "अहो ! भद्रम् भद्रम्, प्रियसम्प्रयोगं सूचयति" इति तामुक्तवती। ततो राधा साश्चर्यं श्रीकृष्णं पश्यन्ती स्वसखीराकार्य दर्शयति। "दुर्लभः श्रीकृष्णसंगमः" इति चिन्तया आकुलितां राधां सख्यो युक्तिपूर्णाभिर्वाग्भिः समाश्वास्य तां श्रीकृष्णस्यानुरागमनुभावयितुं श्रीकृष्णसमीपे लताव्यवहितं प्रदेशमनैषुः। ससहचरः श्रीकृष्णश्च पूर्वं चन्द्रावलीं दृष्ट्वा "एतद्वदनचन्द्रिका चन्द्रमप्यवलीकरोति" इति यथार्थनामतया सानुरागं तां वर्णयन् अग्रे शोभया सर्वातिशायिनीं विविधभावभङ्गिमवतीं राधिकां दृष्ट्वा तत्रैव सर्वेन्द्रियवृत्या एकाग्रीभवति। किञ्चाधैर्योत्कण्ठाचिन्ताभिर्व्याकुलीभूय स्वसखीन् पृच्छति—"अपि भवन्तस्तस्या अपि मयि प्रेमास्तीति प्रतियन्ति" ? ते च "तस्या भावभङ्गिममयो दृग्व्यापार एव भवति तत्प्रेम प्रकटयतीति मुधैव चिन्ता भवतः" इत्युदतरन्।

ततः "सखि ! दिष्टया वर्द्धसे यत्त्वां कृष्णः सानुरागः प्रेक्षते" इति सख्या कर्णमूले अभिहिता राधिका सन्तप्तहृदया "प्रियसखि ! प्राचीनैरविगणितपुण्यैरयं याशोदेयो दृग्गोचरो भवति"इति स्वसखीमाह। "मां दृष्ट्वा स्वसखीं राधा किं कथयति" इति श्रीकृष्णेन पृष्टः सुदामाऽपि तस्या अनुरागसूचकं वचनं कृष्णाय प्रकटयति। एवं परस्पराऽवलोकनाऽनुरागोत्कण्ठाभिस्तयोरुत्तरोत्तरं वर्द्धमाना संगमनोत्कण्ठा तापं जनयति। ततश्च वातविवर्तितवसना राधिका चञ्चलचेलाञ्चलेन सकलकलेवरमावृण्वती कुञ्जकुटीरं प्रविशति। अथ भद्रमुखः सर्वान् सम्बोध्य कथयति—"राधा कस्यापि वस्तु चोरयित्वा वसनेनाच्छाद्य पलायते। तत्पश्यत कस्य किं वस्तु नास्तीति"।

ततः "सखे भद्रमुख ! ममैव सर्वस्वं कनककोरकद्वयम् अपहृतम्, तत्त्वरया आनयतु" इति श्रीकृष्णस्य वचः पालयन् भद्रमुखः सत्वरं प्रस्थितः। ततश्च रुदन् प्रत्यावृत्तो भद्रमुखः "कथं रोदिषि" इति पृष्टः प्रत्याह—"इतो गत्वा तव कनककोरकद्वयं तस्या उरसि विलोक्य बलात्तदानयनप्रवृत्तं मां "चोरसंघाती त्वं चोरोऽसि" इति भणित्वा मम वसनेनैव मम बन्धनं कृत्वा कर्णयोः कपोलयोर्नासियोश्च मोहनं कृतम्। आकुञ्चितेन पाणिना शिरसि प्रहारश्च कृतः" इति। ततः श्रीकृष्णस्तेन सह तत्रागत्य—"अयि साहसिनि ! परद्रव्यापहारिणि ! कथमयं मम प्राणसमः सहचरस्तिरस्कृतो भवतीभिः ?"

इत्याह। ततो राधा—"सखि! किं तावदयं कथयति? कानि वस्तून्यपहृतान्येतस्यास्माभिः?" इति सान्तःप्रमोदं सखीमपृच्छत्। ततः कृष्णः "कथय कथं न मत्काननकुसुमान्यपहृतानि"? इति सकपटभर्त्सनमवोचत्।

एवं वार्ताप्रसङ्गे यदा श्रीकृष्णस्तस्याः करग्रहणाय करं व्यापारयत्, तदा राधा तिर्यङ्निरीक्ष्य किञ्चिदपसृत्य—"सखि! दीयन्तामेतस्य कुसुमानि" इत्युक्त्वा तद्गात्रेषु कुसुमानि क्षिपति। ततः श्रीकृष्णः सप्रमोदम्—"स्तवकद्वन्द्वमुरः परिसरर्वातनाम्बरेण संवृतमपि कथं न समर्प्यते? तत्रापि मत्स्वाम्यनिवेदकं श्यामं महः उपरि वर्तत एव" इत्यादि विविधवाग्वैचित्रीभिः साक्षेपं क्रीडन् यदा तस्याश्चित्राम्बरमाक्रष्टुं प्रवृत्तस्तदा "मुञ्च-मुञ्च चेलाञ्चलं निर्लज्ज! किमेवमुन्मत्तोऽसि" इत्येवं राधिकया मन्दं निवार्यमाणोऽभूत्। अस्मिन्नेवावसरे "पुत्रि राधे! इदानीमपि कुसुमावचयनवेला न विरमति" इति धात्र्या आकारिता राधाऽन्तस्तप्यमाना कातराक्षी पुनः पुनः प्रियमुखमीक्षमाणा सखीभिः सह गृहाय प्रस्थिता। श्रीकृष्णोऽपि सविषादम् आत्मगतम् "हन्त! ममाधि-महौषधी राधा करतलगतापि विधिना अपहृता। तच्च मे प्राणधारणाशा, तस्या अधरमधु न पीतम्, परिमलोऽपि नाघ्रायि, समाश्लेषादस्या विरहदहनोत्तापशमनमपि न कृतम्, दुर्दैवेन आशंसितमपि मिलनं विघटितम्" इत्येवं चिन्तयन् वयस्यैः सह गृहमगच्छत्।

अस्मिन्नङ्के राधा-माधवयोर्विरहासहः परस्परप्रेमासंरूढ इति वर्णितम्। चन्द्रावल्या राधया च श्रीकृष्णसौन्दर्यस्य निरीक्षणात् तथा श्रीकृष्णेन चानयोरन्यासां च गोपरमणीनां सौन्दर्यं निरीक्ष्य मुग्धभावाङ्गीकारादस्याङ्कस्य "**मुग्धमधुसूदनः**" इति नामापि कथावस्त्वनुगतार्थमेवेति।

## तृतीयेऽङ्के

नन्दभवनं प्रति यान्ती राधा-सखी रुचिमती मार्गे मिलितया वनदेवतया राधिकायाः कुशलं पृष्टा "कृष्णदर्शनाऽवधि सा नितान्तं शून्यहृदयेव संजाता" इति निवेदितवती। वनदेवता च "वत्सस्य कृष्णस्यापि राधावियोगात् परम् एवमेव कष्टा-दशा, तद्वत्से! ते सखी दिष्टया वर्द्धते, तस्यै वत्सस्यानुरागं तद्विरहोद्भूतमन्तःसन्तापं च विज्ञाप्य कथञ्चिद् आश्वासनेन वत्साया राधिकायाः प्राणा रक्षणीयाः" इत्युक्त्वा तां प्रातिष्ठिपत्। साऽपि गोकुलेन्द्रगृहं गत्वा गोचारणादनिवृत्तं कृष्णं वात्सल्येन सोत्कण्ठं चिन्तयन्तीं यशोदामपश्यत्, उपसृत्य प्रणनाम च। यशोदया च "अपि कुशलं वृषभानुगृहे"? इति पृष्टोवाच—"देवि!

सकलं कुशलम्; किन्तु स्वपुत्र्या राधाया अनुरूपं वरमलभमाना विमनायते गृहस्वामिनी सुरसा। राधाऽपि इदानीं कालभुजङ्गमस्पर्शाद् जीवितसंशयमारूढेव लक्ष्यते"।

अस्मिन्नेव समये श्रीकृष्णो वनाद् वयस्यैः सममागतः। यशोदा च रुचिमतीमापृच्छमानामकथयत्—"वत्से! निजमन्दिरमनुसर। अहमपि वत्सस्य स्नान-भोजनपानादिसौविध्यं सम्पाद्य आगच्छामि" इति। ततो म्लानमुखश्रियं श्रीकृष्णं विलोक्य पितरौ वात्सल्यभावेन नितरां खिद्यतः। "वने वकवत्सयोरसुरयोर्वधश्च कृष्णेन कृतः" इति विज्ञाप्य सुदामादयः कृष्णसहचराः स्वं स्वं गृहं गताः। गृह एव स्नानाय मात्राऽनुरुद्धोऽपि कृष्णः "मज्जनमेव मह्यं रोचते, तत्पुरदीर्घिकाऽवगाह एव कर्तव्यः" इत्युक्त्वा स्नानसामग्रीपाणिभिर्धात्रेयिकाभिः सह पुरदीर्घिकातटं गतवान्। तत्र च गात्रदाहमनुभूय "सरसीशीकरसरसपरागसान्निध्येऽपि मित्रेण मलयसमीरेण संधुक्षितो हृदयस्थः स्मराग्निर्गात्रदाहमेव जनयतीत्यविचारितमेव मया पुरवापीस्नानमाकाङ्क्षितम्" इत्येवं चिन्तयन् तत्रैव राधान्तःपुरसरसीविहारिण्या राजहंस्या उदीरितं राधिकाविरहव्यथावर्णनपरं श्लोकद्वयमश्रृणोत्। तत्र गत्वा "राजहंसि! अपि सा दृष्टा?" इत्यपृच्छत्। सा च—"माधव! दृष्टैव सा दशमीं दशामनुभवन्ती केवलं त्वन्नामतो रोमाञ्चिततनुर्जीवतीति प्रतीयते"। श्रीकृष्णोऽपि नितरामुद्दीपितविरहव्यथः राधायै ससमाश्वासनं वाचिकं सन्दिश्य स्नानाय निर्गतः। राधिका च असह्यविरहतापेन दशमीं दशां प्राप्तेव यदा मूर्च्छति, तदानीमेव श्रीकृष्णस्य वंशीस्वनः श्रूयते, तेन लब्धसंज्ञा राधिका श्रीकृष्णस्य स्निग्धानुरागपूर्णं सोत्कण्ठं वचनं शृण्वती प्रमुदिता सखीभिः कुञ्जाभ्यन्तरं नीयते। तत्र च भद्रमुखेन सह राधाविषयिणीं वार्तां कुर्वन् कृष्णस्तेनोक्तः—"अहं तामानेतुं गच्छामि, यदि लड्डुकार्थं मे किमपि ददासि" इति। कृष्णेनानुमतश्च स निर्गतः। श्रीकृष्णश्च "इहैव कुञ्जे उपविश्य भद्रमुखं प्रतिपालयामि" इत्युक्त्वा यदा कुञ्जाभिमुखमुपसर्पति, तदैव राधासखी चारुमती कृष्णमुपसृत्य स्वसख्यास्तीव्रतरं विरहतापं शमयितुं प्रार्थितवती।

अथान्यास्वपि राधासखीषु सव्याजं कुञ्जान्निर्गतासु एकाकिनीं राधां त्रपापरवशामङ्के कृत्वा सप्रणयाऽनुरागजल्पं यदा श्रीकृष्ण आलिङ्गति, तदानीमेव "भो भो गोपगोवत्सवत्सलकृष्ण! परित्रायस्व, परित्रायस्व, केनापि कालकल्पेन ज्वलनेन सकलमेव गोकुलं कवलीक्रियते" इति सकलकलं नन्दोक्तं निशम्य सत्वरमुत्थाय "कुतोऽसौ कुतोऽसौ" इति वदन्

निष्क्रान्तः। राधाऽपि रसभङ्गेनानुतप्ता ततो निष्क्रम्य सखीमण्डलमध्यं गत्वा ताभिः सह गृहाभिमुखं प्रस्थिता। अस्याङ्कस्य "सुस्निग्धमाधवः" इति नामापि अङ्कस्थकथानुरूपमेव, प्रेयस्यां राधायां माधवस्य सौस्निग्ध्यपूर्ण-व्यवहारात्।

## चतुर्थेऽङ्के

रुद्र-ब्रह्मेन्द्रादयो देवा अघासुरं व्यापाद्य सहचरैः सह पर्वतोपत्यकामध्यासीनं मातृचरणैः प्रेषितानि विविधोत्तमपक्वान्नादिभोज्यानि भुञ्जानं श्रीकृष्णमन्योन्यं चर्चयन्तो भक्तिभावेन स्तुवन्ति। अस्मिन्नेवावसरे बलरामो गोकुलादागतः। श्रीकृष्णेन कुशलं पृष्टः "त्वत्प्रभावादेव दावाग्नि-कवलितगोकुलगोपबालानां रक्षणमभूत्" इत्यादिकं श्रीकृष्णस्य असाम्यातिशयैश्वर्यं वर्णयंस्तमस्तौत्। ततो ग्रीष्मर्तौ तालवने तालफलभक्षणकामैर्गोपबालैर्विज्ञापितो बलस्तांस्तालफलभक्षणायान्वमंस्त। तालवनाभिमुखं धावत्स्वेव तेषु धेनुको नामासुरः कालाकारमहारासभाकारस्तानभ्यधावत्। ततो भीतांस्तानाश्वास्य भगवांस्तालाङ्कः सबन्धुं तं हत्वा स्वापहारिणं तद्भ्रातरं गोपार्भकवेषं प्रलम्बमपि शिरसि वज्रकल्पमुष्टिघातेन जघान। गोपबालाश्च श्रीकृष्णेन सह प्रमुदिता-स्तत्समीपमुपसस्रुः।

ततो मदनमोदिनीप्रभृतिभिः राधासखीभिर्माधवेन पल्लवितां फलवतीं राधायाः सौभाग्यलतां दिदृक्षुभिः तदन्तरङ्गसखी चारुमतिस्तस्याः प्रथमसमागम-वृत्तान्तं पृष्टा "श्लिष्टैः पदैः पिशुनयेच्च रहस्यवस्तु" इति समयमनुसृत्य राधा-माधवयोर्मधुरं रहःश्रृङ्गारक्रीडनमवर्णयत्। तच्छ्रुत्वा चारुमत्या सह सख्यो यदा राधिकायाः कुञ्जान्तिकं गच्छन्ति, तदा तत्र तामेकाकिनीं दृष्ट्वा पृच्छन्ति—"सखि! कथमेकाकिन्यसि"? इति। तदा सा हृदयसन्तापमुद्गिरन्ती अकथयत्—"निद्रामुद्रितनेत्रं मम जीवितं काचित् सापत्न्यदोषादपजहार" इति।

अथ "चन्द्रावली सखीभिरेव राधासकाशाच्छ्रीकृष्णोऽपहृतः स्यात्" इत्यनु-माय राधासख्यो राधया सह तं देशं प्राप्ता, यत्र चन्द्रावल्या सह श्रीकृष्णो वर्षर्तुसुषमां वर्णयन् रममाण आसीत्। ततस्तास्तयोः संकथां शुश्रूषवः कुञ्जा-न्तरिता अभूवन्। चन्द्रावली च वृष्टिभयं व्याजीकृत्य कृष्णं सन्निहितकुञ्जान्त-राभ्यन्तरं नीतवती। तत्र वृष्टिवर्णनप्रसङ्गे श्रीकृष्णेन "धारा" इत्यस्य स्थाने "राधा" इत्युक्तम्, अनेन गोत्रस्खलनेन धृतोरुमानां चन्द्रावलीमनुनयता कृष्णेन यदा "दासो यद्यपराधभूः" ( कृ० कु० ४।४१ ) इति श्लोकं पठित्वा तच्चरणयोः

पतित्वा "न राधिकामोदवहा" ( ४।४५ ) इत्यादि चाटूक्त्या च सा प्रसाद्यमानैवासीत्, तदैव सन्निहितकुञ्जेऽन्तरितया राधिकासख्या उक्तम्—"राधिकामोदवहैव ते" इति। तच्छ्रुत्वा रहस्यभेदाच्छङ्कितः कृष्णश्चिन्ताङ्कितां मुखमुद्रां प्रकटयंश्चन्द्रावलीं प्रति "प्रिये! अतिकराला काचन दुश्चिन्ता-कालव्याली लोकमिमं व्याकुलयन्ती प्रत्यवस्थिता, तदनेन पथा निर्गत्य सखीमण्डलं मण्डयतु भवती, यावदहमेनां व्यापादयामि" इत्युक्त्वा तां प्रस्थाप्य स्वयमन्येन वर्त्मना निर्गत्य राधायाः समीपमुपससार। राधया च सामर्षेर्ष्यम् कुञ्जाभ्यन्तरे चन्द्रावल्या सह तस्य नर्मालापमुदाहृत्य यदा स आक्षिप्यत, तदा "असत्यमेवेदं सर्वम्" इत्याश्चर्यं प्रकटयंस्तामनुनयन् बलादालिङ्गति। अस्मिन्नेवावसरे प्रागेवाशङ्कितैतदाक्षेपसमाधानाय श्रीकृष्णेन नियोजितौ सुबल–प्रबलनामानौ सखायौ धृतचन्द्रावली-माधववेषौ अन्योन्यं नर्मालापं कुर्वाणौ तत्रागच्छतः। "भवतीभिः श्रुतः सर्वोऽपि नर्मालापादिरेतयोरेव। तन्मिथ्यैव अहमुपालब्धः" इत्युक्त्वा कृष्णेन आत्मोपरि कृतः तासामाक्षेपः सुष्ठु परिहृतः। राधिका च वञ्चनयाऽनया लज्जिता सुबलं प्रति सावहित्थकपटरोषम्—"सुबल! किमेवमेव वयं परिहसनीयाः? तदितो गच्छामः" इति सखीभिः सह प्रस्थिताऽभूत्।

श्रीकृष्णश्च सस्मितम्—"साधु समाहितं भवद्भ्याम्, तदागच्छताम्, वयमपि राधामनुसरामः" इति सुबलप्रबलौ प्रशंसन् ताभ्यां सह निर्गतः। अस्मिन्नङ्के राधया चन्द्रावल्या च रहः समागमात् सुबलप्रबलयोः पूर्वनियोजितयोः कौशलेन राधया तत्सखीभिश्च प्रत्यक्षीकृतस्यापि आक्षेपस्य सुष्ठुसमाधानाच्च श्रीकृष्णो नितरां मोदमुवाहेति **"सामोददामोदरः"** इति सार्थकमेव अङ्कनाम।

## पञ्चमेऽङ्के

रासविलासाख्ये पञ्चमेऽङ्के शुकशुकी इति नामभ्यां व्यवहृतस्य किन्नरमिथुनस्यान्योन्यं प्रश्नोत्तरमुखेन श्रीकृष्णेन स्वप्रेयसीनां चम्पकलतिका-कमलमाला-शृङ्गारसरसी-रसतरङ्गिणीप्रभृतीनां वयस्याभिः प्रस्तुतानामनङ्गपत्रिकाणां वाचनम्, ताभ्यः ससमाश्वासनं प्रतिवाचिकप्रदानञ्च वर्ण्यते। किञ्च तदानीमेव सुवचनेन सहचरेण निवेदितां सर्वासां गोकुलबालानां विप्रलम्भदशां श्रुत्वा रासविलासप्रसादेन सर्वासामेव स्वप्रेयसीनां स्मरकलासु कौशलं सफलयितुमध्यवसितमित्यप्यभिहितम्।

ततः शुकमिथुनं मिथो वार्तापरं दृष्ट्वा भद्रमुखः कृष्णमचकथत्—"अयं राक्षसो राक्षस्या सह अस्मान् भोक्तुमेव किमपि मन्त्रयति, तदेनौ व्यापाद्य यमसदनं प्रापयेति" तच्छ्रुत्वा किन्नरमिथुनं भद्रमुखेनालक्षितं कुञ्जाभ्यन्तरं प्रविश्यातिष्ठत्। ततः श्रीकृष्णो भद्रमुखेन सह वृन्दावनं प्रविष्टः शरदमागतामुपलक्ष्य सरः कमल-कास-हंसादिशोभां वर्णयन् सायं कालिन्दीतटोपवनशोभां निभालयंश्च चन्द्रोदयं ज्ञात्वा भद्रमुखं प्रातर्भगवतोऽगस्त्यस्यार्चासम्भारसम्पादनाय भवनं प्रस्थाप्य एकाकी रासक्रीडार्थं प्रेयसीनां गोपसुन्दरीणामाकारणाय वंशीमधरसुधाभिरापूरयन् अवादयत्। तदाकर्ण्य समकालमेव गोपसुन्दर्य आकृष्टचित्तास्त्यक्तान्यव्यापारा व्यत्यस्तवस्त्राभरणा रसतरङ्गिण्य इव रससागरं तं प्रदेशं प्राप्ताः। अन्तःप्रीतोऽपि कृष्णस्तासां प्रेमदाढर्याय प्राक् "कुलस्त्रीणां भवतीनामत्रागमनं नोचितम्" इत्यादि प्रतीपवचनैः परीक्षितवान्, प्रेमपारवश्यञ्च तासां दृष्ट्वा वृन्दावनशोभां दर्शयन् ताभिः सह आनुकूल्येन क्रीडासु प्रावर्तत। अथ सर्वासु प्रियतमोचितमाल्यनिर्माणार्थं पुष्पावचयव्यापृतासु एकाकिनी राधैव कृष्णान्तिकेऽतिष्ठत्। सर्वाधिकप्रेयसीमेकाकिनीं तां स्वसविधे दृष्ट्वा तस्यै सर्वातिशायिसौभाग्यं प्रयच्छन् तया सह एकान्ते यमुनायाः पुलिने गन्तुं प्रावर्तत। अतिश्लाघया प्राप्तगर्वां तां विहाय अन्तर्हितश्चाभूत्। अथ कृतपुष्पावचयाः सर्वा गोपरमण्यस्तत्र प्रेयांसं कृष्णमदृष्ट्वा तदन्वेषणपरा राधामेकाकिनीं दूयमानहृदयामपश्यन्। तयाऽऽवेदितवृत्तान्ताश्च सर्वाः प्रियतम-विश्लेषविह्वला लब्धोन्मादास्तरुलतामृगादीन् पृच्छन्त्यो विलेपुः।

अथ राधिका सर्वाः सम्बोध्य कथयति—"अयि! किमिहावस्थानेन, आगच्छत इतो गत्वा कालिन्दीं वनदेवतां च पृच्छामः" इति। अस्मिन्नङ्के रासविलासस्योपक्रमाद् "**रासविलासो**" नामायमङ्कः।

## षष्ठेऽङ्के

पूर्वाङ्कसूचिते कालिन्दी-वनदेवते संगत्य अन्योन्यं प्रणमतः। तत्र "भगवति! किमिति चिन्ताकुलितेव लक्ष्यते भवती" इति कालिन्द्या पृष्टाया वनदेवताया "भगवतो गोकुलेन्द्रसूनोर्विरहव्याकुलाः गोकुलबालाः समालोक्य क्लेशजलधिनिमग्नास्मि" इति वचनं निशम्य कालिन्दी अपि तासां विरहासहिष्णुतां चिन्तयित्वा विद्रुतहृदया अतिव्याकुलतां गता वनदेवतया समाश्वासिताऽभूत्। अथ यावदुभे अपि कृष्णानुसन्धानाय उपक्रमेते, तावत् कीरैः पठ्यमानाभ्यां श्लोकाभ्यां "गोपीभिः सह रासे हरिः क्रीडति" इति ज्ञात्वा तदभिमुखं पश्यन्त्यौ सप्रमोदमन्योऽन्यं रासक्रीडां वर्णयतः।

अथ कोटितोऽप्यधिकाभिरतिश्रान्ताभिः प्रेयसीभिः सह यमुनाऽवगाहनाय आगच्छन्तं श्रीकृष्णं दृष्ट्वा ते मार्गाद् अपसृते भवतः। जलक्रीडाऽवसाने प्रभात-प्रायायां रात्रौ गोपीहरणायागतम् अतिभयानकाकारं कंससखं शङ्खचूडं श्रीकृष्णो व्यापादयामास। सूर्योदये जाते व्रजाङ्गना एकस्मिन् रम्ये वनोद्देशे स्व-स्वसौभाग्यं वर्णयन्ति। तदानीमेव गोचारणोपक्रमे मुरलीमापूरयन् श्रीकृष्णः मणिपञ्जरवर्तिभिः कीरैरभ्यस्यमानां गोपीनामन्योन्यसौभाग्य-वर्णनावर्णावलीं शृण्वन् तास्वेवासक्तमानसो भवति। भद्रमुखस्तं ततो निवार्य गोचारणायानैषीत्। अथ गोवृन्दं कालिन्द्यामम्भः पाययित्वा वृन्दावनं सञ्चारयत्सु गोपेषु अतिकृष्णवर्णं महोक्षाकृतिं कंसानुशिष्टं कृष्णानिष्टायागतं दुष्टात्मानमरिष्टं व्यापाद्यागतः श्रीकृष्णो "भवन्तं दिदृक्षुर्भगवान्नारदः समायाति" इति वनदेवतया विज्ञापितः सन् तं सस्पृहं प्रतीक्षमाणस्तस्थौ।

अथ श्रीकृष्णप्रेमनिमग्नं तमुपवीणयन्तमश्रुपरिप्लुतमुखं समुपसृत्य चरणयोः पतितं नारदं श्रीकृष्णः कराभ्यामुत्थाप्य हृदयेनाश्लिक्षत्। विमानस्था देवाश्च तमस्तुवन्। ततोऽभिमुखायातमश्वाकृतिं केशिनामानं राक्षसं तन्मुखे दीर्घं भुजभुजगं निवेश्य यमसदनातिथिं विधाय प्रत्यावर्तमानं पुष्पवृष्ट्या देवै-रभिपूजितं स्मेरमुखं श्रीकृष्णमभिनन्द्य नारदो व्यजिज्ञपत्—"भगवन्! भवतो भविष्यच्चरितं नाट्येन उद्धारयितुकामेन मया रङ्गविद्यापारङ्गमाः शिक्षयित्वा नियोजिताः सन्ति" तदाज्ञापयस्व तत्प्रयोगायेति। "अभिमतमेवेदं मम" इति भगवता प्रतिनन्दितो नारदः सप्रसोदं निर्गतः। अथ भगवान् श्रीकृष्णः "हंहो वयस्याः! चलन्तु सर्वे सदनं प्रति, वयमपि सर्वे नृत्यदर्शनाय सज्जीभवामः" इति विज्ञाप्य सर्वान् व्यसर्जयत्। केशिविनाशान्तक्रीडावर्णनादङ्कोऽयं **"केशि-विनाशो"** नामेति।

## सप्तमेऽङ्के

श्रीकृष्णानुग्रहादङ्गिरःशापप्राप्तसर्पत्वान्मुक्तः सुदर्शनो नाम गन्धर्वः स्वपत्न्या कान्तिमत्या सह विमानस्थः स्वोद्धारक्षेत्रं वृन्दावनं सबहुमानं प्रणमन्, कान्तिमत्या तस्य घूर्णन्नेत्रत्वजृम्भमाणमुखत्वालसाङ्गत्वादिप्रजागर-चिह्नानि दृष्ट्वा तत्कारणं पृष्टः प्रत्याचष्टे—"प्रेयसि! रात्रौ अत्यर्थमधुपानात्प्र-गाढं निद्रितायां त्वयि त्वज्जागरणाय विफलप्रयासेन मया एकाकिनैव गत्वा महेन्द्र-सभायां चित्ररथेन गन्धर्वराजेन उर्वश्यादिभिरप्सरोभिः सह अभिनीतं नारद-प्रणीतं श्रीकृष्णमधुरलीलामयं "मदनविनोदनम्" नाम नाटकं दृष्टम्; यस्मिन्

सकलं कामकेलिविलसितं करस्थामलमुक्ताफलमिव प्रतिपदमुपपादितम्। अद्य तावत् तस्यैव भगवतो नारदस्य "कंसविध्वंसनं नाम नाटकमत्रैव वृन्दावने भगवतः श्रीकृष्णस्य सपरिकरस्य पुरस्तादभिनेष्यते; यस्मिन् भगवान् भरतः सूत्रधारः, पारिपार्श्विको वात्स्यायनः, व्यासाद्या महर्षयः, पुरन्दराद्या देवाः, अप्सरसः, गन्धर्वाः, प्रमथयूथपतयश्च स्व-स्वोचितां भूमिकां ग्रहीष्यन्ति, तदावामपि भूमिकाग्रहणभूमीमवतराव:" इत्युपक्रम्य पूर्वाङ्कसूचितस्य भगवतः श्रीकृष्णस्य भविष्यच्चरितात्मकस्य "कंसविध्वंसन"नामकस्य गर्भाङ्कस्याभिनयो महता कौशलेन उपनिबद्धः। यस्मिन् अक्रूरागमनादिकंसवधान्ता लीलाः सुष्ठु प्रदर्शिताः। तेनायमङ्कः "**कंसवधो**" नामेति।

## कथामूलम्

एतन्नाटकसम्बन्धिकथानां मूलं घटनाक्रमश्च श्रीमद्भागवतानुसार्येवेति—

धातुर्वक्त्रसरोजतः प्रथमतो या नारदेनाहृता
व्यासेन व्यतिशायिता शुकमुखेनाऽऽसेविता सन्ततम्।
सा दैवान्मधुसूदनाधरपुटाल्लब्धा मया यत्नतः
श्रीमत्कृष्णकथासुधेह विबुधैरास्वादनीया न किम् ?॥(कृ०कु०१।५)

इति प्ररोचनाश्लोकेन कविना स्वकण्ठेनैवाभिहितम्। परन्तु राधा-चन्द्रावल्योरन्यासाञ्च प्रेयसीनां श्रीदाम-सुदामकिंकिणीदामादिसहचरगोपानां विशिष्य रहोलीलाकथामूलं पद्मपुराणे पातालखण्डे ऊनसप्ततितमाध्यायात्सप्त-सप्ततिपर्यन्तेषु अष्टसु अध्यायेषूपलभ्यते। सामरहस्योपनिषदि च मधुररसात्मको भक्तिरसो विशिष्य व्याख्यातस्तत्प्रभावोऽप्यस्मिन् दृश्यते। तत्र हि रसलीलावर्णन-प्रसङ्गे उक्तम्—"रसलीलायां सख्यश्चातुर्यगुणयुक्ताः ससखीसमूहा यौवनसंपत्ति-पूर्णा अनेककलाकोविदा रसभावेन पूर्णा भवन्ति। तत्र हंसयुग्मानि कोटिशो देववाण्या निकुञ्जदेव्या यशो गायन्ति। तत्रैको भ्रमरो देववाण्या चातुर्येण मानस्थाने राधिकां प्रति दूतत्वं कुर्वंस्तस्या मानमपनयति। अपरः शुकोऽप्येवमेव राधिकाया मानस्थाने मन्दारनिकुञ्जे निवसति" इत्यादि। तेन कथेयं पुराणादि-प्रसिद्धैव। तथापि कविकौशलकृतश्चमत्कार एवात्र सहृदयानां हृदयाणि विशेषेणानन्दयति।

## पात्राणां परिचयः

**तत्र पुरुषाः—**

**सूत्रधारः**—नाटकीयकथावस्तुप्रस्तावकः प्रधानो नटः।

**पारिपार्श्विकः**—सूत्रधारानुचरस्तत्सहायको नटः (सप्तमे गर्भाङ्क एव उपनिबद्धः)।

**सदन्तकः**—कंसहिताशंसो कंसप्रतिनिधिः।

**नलकूबरः**—धनदपुत्रो गन्धर्वः श्रीकृष्णेन यमलार्जुनत्वान्मोचितः।

**श्रीकृष्णः**—चरितनायकः भक्तिरसालम्बनीभूतः।

**भद्रमुखः**—श्रीकृष्णस्य सखा गर्गमहर्षेस्तनयो विदूषकस्थानीयो ब्राह्मणः।

**श्रीदामा—सुदामा—वसुदामा—किङ्किणीदामा-सुजयः-प्रचण्डः—सुचण्डः-प्रबलः—सुबलः-महाबलः-अतिबलः—अन्ये च गोपार्भकाः** } श्रीकृष्णस्य सखायः

**नन्दः**—श्रीकृष्णस्य गोकुलस्थः पिता।

**त्रिपुरदलनः-कमलासनः-सुनासीरः-वीतिहोत्रः** } एतन्नामानो देवाः श्रीकृष्णलीला-दर्शनाय विमाना-न्यरुह्य आगताः

**बलरामः**—श्रीकृष्णस्य अग्रजो भ्राता—रोहिणीपुत्रः।

**शुकः**—एतन्नामा किन्नरः।

**नारदः**—देवर्षिः।

**सुदर्शनः**—श्रीकृष्णपादस्पर्शात्सर्पत्वान्मुक्तः एतन्नामा गन्धर्वः।

**अक्रूरः**—श्रीकृष्णस्य पितृव्यः कंसाज्ञया श्रीकृष्णं मथुरां नेतुमागतः कंसाज्ञावर्त्यपि भगवतः श्रीकृष्णस्य भक्तः।

**सारथिः**—अक्रूररथसूतः।

**पुरुषः**—अक्रूरप्रणिधिः।

**कुवलयापीडः**—कंसस्य हस्ती गजायुतबलः ।

**महामात्रः**—कुवलयापीडस्य यन्ता ।

**कंसः**—भोजराजः श्रीकृष्णस्य शत्रुभूतो मातुलः ।

**पौरजानपदाः**—माथुरादयो भोजराजस्य प्रजाः ।

**वसुदेवः**—श्रीकृष्णजनकः, कंसेन स्वकारागृहे वन्दीकृतः ।

**चाणूरः**—कंसानुचरः, श्रीकृष्णस्य प्रतिमल्लः ।

**मुष्टिकः**—कंसानुचरः, बलरामस्य प्रतिमल्लः ।

**सभासदः**—धनुर्यज्ञावलोकनाय समवेता लोका विभिन्नदर्शनमार्गैः श्रीकृष्णोपासका भक्ताश्च ।

**देवान्तक-कङ्क-न्यग्रोधादयः**—कंसाज्ञावर्तिनोऽसुरप्रकृतयो भटाः ।

**स्त्रियः**—

**नटी**—सूत्रधारभार्या ।

**राधा**—प्रधाननायिका नन्दामात्यस्य वृषभानोः कन्यका ।

**मदनमोदिनी**—राधासखी ।

**मनोजरञ्जिनी**—राधासखी ।

**चन्द्रावली**—प्रतिनायिका नन्दामात्यस्य चन्द्रसेनस्य कन्यका ।

**रतिकौमुदी**—चन्द्रावल्याः सखी ।

**कामकला**—चन्द्रावल्याः सखी ।

**अनङ्गसेना-मनोजवाहिनी-कमलमाला-चम्पककलिका-कामाङ्कुरा-अम्बुजलीला-शृङ्गाररसरसी-रसतरङ्गिणी-मदन-दीपिका-सुरतरुवल्लरी-कुङ्कुमवल्लरी-रसालवल्लरी-प्रभृतयः** } कृष्णस्य प्रेयस्यः गोपबालाः

**वनदेवता**—वनाधिष्ठात्री-देवता ( राधाकृष्णयोर्वात्सल्यवती तयोः संगमनाकाङ्क्षिणी ) ।

**रुचिमती**—राधासखी वृषभानुपत्न्याः सुरसायाः परिचारिका ।

**यशोदा**—नन्दपत्नी गोकुलेश्वरी, गोकुले कृष्णस्य माता ।

**सुचरिता-सुभाषिणी**—यशोदायाः परिचारिके ।

**धात्रेयिकाः**—श्रीकृष्णस्य धात्रीरूपाः यशोदायाः परिचारिकाः।

**हंसी**—स्फुटाक्षरसंस्कृतभाषिणी राधान्तःपुरसरसीविहारिणी राजहंसी।

**चारुमतिः**—राधाया अन्तरङ्गसखी।

**शुकी**—शुकनाम्नः किन्नरस्य भार्या।

**चम्पकलतिका**—कृष्णप्रेयसी।

**स्वर्देव्यः**—विमानस्था देवाङ्गनाः रासक्रीडावलोकिन्यः।

**कान्तिमती**—सुदर्शनस्य गन्धर्वस्य भार्या।

**पुरदेवता**—मथुरानगरस्य अधिष्ठात्री देवता।

**शोभा**—पुरदेवतायाः सहचरी।

**त्रिवक्त्रा**—कुब्जानाम्नी कंसस्याङ्गरागानुलेपनार्पणे नियोजिता दासी।

**पुरसीमन्तिन्यः**—मथुरानगरस्य स्त्रियः।

**देवकी**—श्रीकृष्णस्य जननी, वसुदेवपत्नी, कंसभगिनी, कृष्णवैरात् कंसेन निजकारागारेऽवरुद्धा।

**कंसवधनाम्नः सप्तमस्य नारदप्रणीततयोपनिबद्धस्य गर्भाङ्कस्य कविकल्पिता अभिनेतारः—**

**सूत्रधारः**—भगवान् भरतः ( नाट्यशास्त्रप्रणेता )।

**पारिपार्श्विकः**—वात्स्यायनः ( कामशास्त्रप्रणेता )।

**अक्रूरः**—भगवान् व्यासः।

**रामकृष्णौ**—असित-देवलौ।

**गोपार्भकाः**—पुरन्दराद्या देवाः।

**गोप्यः**—स्वर्गविलासिन्यः।

**नन्दः वसुदेवश्च** - कश्यपः।

**यशोदा देवकी च**—अदितिः।

**विदूषकः**—महर्षिः अष्टावक्रः।

**गायका वादकाश्च**—तुम्बुरुप्रभृतयो गन्धर्वाः।

**कंसादयः**—यथायोग्यं प्रमथयूथपतयः।

## अथ रसादिसमीक्षा

**तत्र रसः—**

अथैतस्मिन्नाटके प्रतिपदमनुभूयमानं भक्तिरसमेव विवरीतुं किमप्युपक्रम्यते।

नित्यशुद्धबुद्धमुक्तस्वभावः सच्चिदानन्दमात्रविग्रहतया निर्गुणोऽपि परमात्मा स्व-स्वरूपभूतया अचिन्त्यदिव्यलीलाशक्त्या निरपेक्षोऽपि अप्राकृतानन्तकल्याणगुणगणान् स्वीकृत्य स्वे महिम्नि स्थित एव सगुणतया प्रतीयमानः अकारणकारुणिकतया अपारसंसारशोकाब्धिमज्जमानलोकोद्दिधीर्षया स्वां चिन्मयीं प्रकृतिमवष्टभ्य राम-कृष्ण-नृसिंह-शिव-ललिताद्यवतारूपेणानन्तानन्दचिन्मात्रैकरसविग्रहेणाविर्भूय निखिलतापप्रशमनीं स्वात्मस्वरूपानुभूतिं सुलभयन् लोकस्योपासनामार्गान् प्रकाशयति। यत्स्वरूपज्ञानाद् यस्य च शरणाश्रयणाल्लोको दुःखाब्धिं तीर्त्वा शाश्वतममृतपदमाप्नोति। प्रत्यपादि चायमर्थः "तरति शोकमात्मवित्" इत्यादिश्रुतिभिः। "मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते" इत्यादिस्मृतिभिश्च।

अत्र प्रपदनीयः सच्चिदानन्दविग्रहो भगवान्, प्रपत्तारो बद्धम्मन्या जीवाः, प्रपत्या तरणीया च माया इति व्यक्तोकृतम्। निरंशस्यापि भगवतस्तत्त्वावबोधाय कल्पितेषु सच्चिदानन्दांशेषु क्रमेण तादात्म्यभाजः सन्धिनी-संवित्ति-ह्लादिनीशक्तयः। एताः सर्वा एव अनुग्रहस्वरूपाः। तत्र सर्वस्थितिप्रयोजकतया प्रथमा सद्रूपतया सर्वसाधारणी। प्राधान्येन द्वितीयया ( संवित्या ) अंशतस्तृतीयया ( ह्लादिन्या ) चानुगृहीता अद्रुतचित्ता मुमुक्षवो जीवन्मुक्तिफलभाजो निर्विशेषे ब्रह्मणि निष्ठिता भवन्ति। अभक्तानामननुगृहीतानां भक्तीतरसाधननिष्ठानामपि पतनश्रवणाज्ज्ञानमार्गेऽभिनिविशमानानामपि भक्तिसाहाय्यावश्यकत्वात्। तथा हि भागवते—

श्रेयः स्रुतिं भक्तिमुदस्य ते विभो!
क्लिश्यन्ति ये केवलबोधलब्धये।
तेषामसौ क्लेशल एव शिष्यते
नान्यद् यथा स्थूलतुषावघातिनाम्॥ (भाग० १०।१४।४)

येऽन्येऽरविन्दाक्षविमुक्तमानिन-
स्त्वय्यस्तभावादविशुद्धबुद्धयः।
आरुह्य कृच्छ्रेण परं पदं ततः
पतन्त्यधोऽनादृतयुष्मदङ्घ्रयः॥ (भाग० १०।२।३२)

तथा न ते माधव ! तावकाः क्वचिद्
भ्रश्यन्ति मार्गात्त्वयि बद्धसौहृदाः ।
त्वयाभिगुप्ता विचरन्ति निर्भया
विनायकानीकपमूर्द्धसु प्रभो ॥ इति ।
(भाग० १०।२।३३)

चरमया (आह्लादिन्या) कार्त्स्न्येनानुगृहीता नारदादयस्तु संवित्तिमन्तोऽपि संवित्तिफलं मोक्षमुपेक्षमाणा द्रुतचित्ततया सर्वदैवानन्दैकरससारसर्वस्वसिन्धौ भगवत्प्रेम्णि निमग्नाः कल्याणगुणगणालङ्कृता भगवत्कृपालवलब्धमनन्तमप्राकृतं भक्तिरसानन्दमनुभवन्तो साधुजनपथप्रदर्शका लोककल्याणहेतवेऽनिशं त्रिलोकीमटन्ति । ब्रह्मज्ञानाग्निभस्मीभूतसमस्तवासनाः, विगलिताहङ्काराः सिद्धाः शुकसनकादयः संवित्या प्राधान्येनानुगृहीता अपि निर्मलान्तःकरणतया प्रसङ्गोपस्थिताप्राकृताद्भुतभगवद्गुणस्मरणमात्रेणैव ह्लादिन्याऽऽकृष्टा भक्तिरसामृतसिन्धौ निमग्ना आनन्दपूर्णा एव भवन्ति । एतदुपष्टम्भकानि च—

"प्रियो हि ज्ञानिनोऽत्यर्थमहं स च मम प्रियः" ।
आत्मारामाश्च मुनयो निर्ग्रन्था अप्युरुक्रमे ।
कुर्वन्त्यहैतुकीं भक्तिमित्थम्भूतगुणो हरिः ॥ (भाग० १।७।१०)
हरेर्गुणाक्षिप्तमतिर्भगवान् बादरायणिः ।
कृतवान् महदाख्यानं नित्यं विष्णुजनप्रियः ॥ (भाग० १।७।११)
तस्यारविन्दनयनस्य पदारविन्द-
किञ्जल्कमिश्रतुलसीमकरन्दवायुः ।
अन्तर्गतः खविवरेण चकार तेषां
संक्षोभमक्षरजुषामपि चित्ततन्वोः ॥
(भाग० ३।१५।४३)

इत्यादिस्मृतिवचनानि, "रसो वै सः, रसं ह्येवायं लब्ध्वाऽऽनन्दीभवति" इत्यादिश्रुतिवचनानि च । भक्तिरसायनेऽपि सिद्धानां भक्तिरसप्रकारो निरूपितः । यथा—"दृष्टमात्रफला सा तु सिद्धेषु सनकादिषु" इति । (भ. र. २।४६)

किञ्च, एतेषां कृते ज्ञानानन्दो भक्तिरसानन्दश्च समान एव । तदुक्तम्—

प्रियतमहृदये वा खेलतु प्रेमरीत्या
पदयुगपरिचर्यां प्रेयसी वा विधत्ताम् ।
विहरतु विदितार्थो निर्विकल्पे समाधौ
ननु भजनविधौ वा तद्द्वयं तुल्यमेव ॥ इति ।

यथा स्वभावकठिने जतुद्रव्ये तीव्रतापकाग्न्यादिना द्रवीभूते वस्त्रादिक्षालनेन निर्मलीकृते च निक्षिप्तस्य रङ्गस्य स्थायिता भवति, तथैव कान्तादिविभिन्नालम्बनकैः काम-क्रोध-भय-स्नेह-हर्ष-शोक-दयादिभिस्तापिते चित्तद्रव्ये द्रवतां गते कान्ताद्यालम्बनोद्बुद्धो रत्यादिभावः सालम्बनो मिश्रीभूय तत्र स्थायितां गच्छति। चित्तमपि सर्वांशेन तद्रागरञ्जितं तन्मयं भवति, अतः सालम्बनात् तस्माद्भावाच्चित्तं पृथक्कर्तुं न शक्यते, सत्यामपि वाञ्छायाम्। किञ्चोद्दीपनैरुद्दीपितः अनुभावैरनुभावितः सञ्चारिभिः सञ्चारितश्च असंलक्ष्यक्रमेण रसतया व्यज्यमानोऽनुभूयते काव्यार्थभावनाभावितान्तःकरणैरुद्रिक्तसत्त्वैः सहृदयैः श्रोतृभिः सभ्यैश्च। परन्तु कान्ताद्यालम्बनस्य प्राकृतत्वाज्जडत्वादल्पत्वान्मलिनतया चात्र रसोऽप्यपूर्ण आविलश्च। अतो बहुजन्मार्जितपुण्यराशिप्रभावविशुद्धान्तःकरणस्य भाग्यवतो भागवतोत्तमस्य असाम्यातिशयभगवद्गुणश्रुतिमात्रोद्बुद्धभगवत्प्रेमाग्निद्रुते चित्ते भगवदालम्बना रतिः सालम्बना मिलिता द्रुतचित्तेन सहैकीभूय स्थायितां गता यदोद्दीपनादिभाविता रसतयाऽनुभूयते, स एव "भक्तिरस" इति व्यपदिश्यते। अत्रालम्बनस्य सच्चिदानन्दघन-नित्य-शुद्ध-बुद्धब्रह्मरूपतया उज्ज्वलः परिपूर्णोऽखण्डोऽनपायी रसोऽनुभूयते। विवेचितं चैतत्सप्रपञ्चं भक्तिरसायन-हरिभक्तिरसामृतसिन्धु-भक्तिरसार्णवाद्याकरग्रन्थेष्विति दिङ्मात्रमत्रोद्दिष्टम्।

नाटकेऽस्मिन् भक्तिरसान्तर्गतः सच्चिदानन्दघनविग्रहश्रीकृष्णालम्बनको मधुरः शृङ्गारोऽङ्गिरसः। तदालम्बनका एव करुण-हास्य-प्रीति-भयानकाद्भुत-युद्धवीर-दानवीर-वत्सल-प्रेयांसोऽष्टौ अङ्गभूता रसाः। तेऽपि भगवदालम्बनकत्वाद्भक्तिरसान्तर्गता एव। तथा हि उज्ज्वलनीलमणौ—

वक्ष्यमाणैर्विभावाद्यैः स्वाद्यतां मधुरा रतिः।
नीता भक्तिरसः प्रोक्तो मधुराख्यो मनीषिभिः॥
अस्मिन्नालम्बनाः प्रोक्ताः कृष्णस्तस्य च वल्लभाः॥
(उ० नी० म० १।३-४)

श्रीकृष्णो विषयालम्बनः। वल्लभाः प्रेयस्यः आश्रयालम्बनाः (टीका)।

किञ्चैकः शुद्धरतिस्थायिकः शुद्धोऽपि भक्तिरसो दशमः। तथोक्तं भक्तिरसायने—

रसान्तरविभावादिराहित्ये तु स्वरूपभाक्।
दशमीमेति रसतां सनकादेरिवाधिकाम्॥ (२।७३)

"नवरसमिलितं वा केवलं वा" इति श्लोके "केवलं वा" इत्यनेन अयमेव शुद्धो भक्तिरसोऽभिप्रेयते। तत्र काम-सम्बन्धद्वय-भयजन्याश्चतस्रो रतयो व्रजदेवीष्वेव युगपदुन्मिषिताः परमरसतां प्राप्ता भवन्ति। तथा हि कामजा शृङ्गार-तादात्म्यापन्ना मधुरा रतिः। सम्बन्धजा द्विविधा—एका पाल्य-पालकभावोत्पन्ना वत्सलरतिः, अपरा सेव्य-सेवकभावोद्भवा प्रेयोरतिः, भयजा स्वमन्तूत्थचित्त-वैकल्यजाता प्रीति-भयानकरसरूपेण परिणामिनी। एतद्रतिचतुष्टयस्य युगपदभिव्यक्तिपुरस्सरं परिपोषे असंलक्ष्यक्रमेण अभिव्यक्तः परमो रसः पानकरसन्यायेनानुभूतिगोचरो व्रजदेवीषु स्फुटं सहजरूपेण विजृम्भते। तथोक्तं भक्तिरसायने ग्रन्थकृद्भिः—

व्रजदेवीषु च स्पष्टं दृष्टं रतिचतुष्टयम्।
तच्चित्तालम्बनत्वेन स्वचित्तं तादृशं भवेत्॥ (२।७१) इति।

आसु चतसृषु अन्यतमां रतिमाश्रित्याभ्यासेन भक्तिरसानुभवेन जन्म-साफल्यमर्जनीयमित्यपि तत्रैवोक्तम्—

तस्मात्स्वचित्तदभ्यासं कुर्याद्रतिचतुष्टये॥ (२।७०) इति।

व्रजदेवीषु युगपद्रतिचतुष्टयमयपरमरसानुभूतिः स्फुटमत्र द्रष्टव्या—

यत्ते सुजातचरणाम्बुरुहं स्तनेषु
भीताः शनैः प्रिय! दधीमहि कर्कशेषु।
तेनाटवीमटसि तद्व्यथते न किंस्वित्
कूर्पादिभिर्भ्रमति धीर्भवदायुषां नः॥

(भा. द. पू. ३१।१९)

अत्र वात्सल्य-प्रीति-भयानक-प्रेयांसो मधुररसधारायां मिश्रिताः पानकरसन्यायेन परमरसतां गच्छन्ति। "नाटकेऽस्मिन् मधुरः शृङ्गारो मुख्यः" इति प्रागवोचम्। यथा प्रथमेऽङ्के श्रीदाम्नो वनोद्देशवर्णनप्रसङ्गे माधविकावर्णने "माधविकामाधवसंमोदराधिका जयति" इति श्रुत्वा, **कृष्णः**—"सखे! सम्यग् ब्रवीषि "माधवसंमोदराधिकेति" अमी नवरमणीया वर्णाः कर्णाभ्यर्णमायान्तः कं जनं न रञ्जयन्ति? कथं वाऽमीषु मधुरिम-शीतिम-सुकुमारिमाणः समुल्लसन्ति?" ( इति ससंवरणं तत्स्तवकाश्रितालिगीतं स्तौति )। **श्रीदामा**—( सगूढस्मितम् ) "प्रियसख! कथं नवीनरमणीहितेयं न स्यात् सुमनः सङ्गिना मधुसूदनेनोद्गीयमाना वर्णावली"। अत्र "राधिका" इति नामश्रवणमात्रेण कृष्णस्य रोमोद्गमेन, भावगोपनेन, तत्र मधुरिम-शीतिम-मधुरिम्णामनुभवेन "नवरमणीया" इत्यस्य

"नवीनरमणीहिता" इति श्रीदामकृतव्याख्यानेन च श्रीकृष्णस्य राधिकायां पूर्वाऽनुरागोऽभिव्यज्यते।

द्वितीयेऽङ्के च वनस्थवृक्षलतादिषु श्यामलिमानमेव सस्पृहमालोकयन्त्या राधिकायाः श्रीकृष्णं प्रति निगूढो हृदयाऽनुरागः प्रकाश्यते। एवमेव पशुपक्ष्यादिषु श्यामलिमानमेव सस्पृहं पश्यन्त्याश्चन्द्रावल्या अपि। अत एव चन्द्रावलीं प्रति तस्याः सख्योरियमुक्तिः—"कथम् अच्छतरम्? अनच्छतरमेवापतितम्, यदि शरच्चन्द्रमण्डलनिर्मले तव हृदये श्यामधामाविर्भावः। यतः—

रज्यति नाशनपाने स्निह्यति न निजे न निद्राति।
मज्जति चिन्तोदन्वति परमिह कृष्णान्तकरो लोकः॥ (२।१) इति।

एतेन चन्द्रावल्याः कृष्णेऽनुरागो भाविविप्रलम्भदशा च सूचिता भवति। अन्यासामपि अनङ्गसेनाकमलमालादीनां प्रथमाङ्कर्चिचतकात्यायनीपूजनप्राप्तवराणां गोपबालानां श्रीकृष्णस्यावलोकनाय तत्रावस्थानेन तासामपि श्रीकृष्णेऽनुरागो व्यञ्जितः। श्रीकृष्णस्य च सानुरागं तासामवलोकनेन सस्पृहं सविशेषं वर्णनेन च तास्वनुरागोऽभिव्यज्यते। सत्यप्येवं राधायां तस्यानुरागः सर्वाधिक[1] आसीत्। यदा कृष्णसखस्य भद्रमुखस्य राधिकासहचरीणां विधानेन कुञ्जाभ्यन्तरे तयोरासन्नः समागमो धात्र्या आकारणेन विघ्निनस्तदा तावसह्यमनुतापं हृदि बिभ्राणौ कृच्छ्रेण कुञ्जान्निर्गत्य गृहाय प्रस्थितौ भवतः। एवं द्वितीयेऽङ्के राधामाधवयोर्विरहासहः परस्परप्रेमासंरूढो भवति। तृतीयेऽङ्के राधिका असह्यविरहतापेन दशमीं दशां प्राप्ता यदा मूर्च्छति, तदानीमेव श्रीकृष्णस्य वंशीस्वनश्रवणेन लब्धसंज्ञा तस्य स्निग्धाऽनुरागपूर्णं वचनं शृण्वती सखीभिः कुञ्जाभ्यन्तरं नीत्वा श्रीकृष्णेन संगमिता। तत्रापि एकाकिनीं तां त्रपापरवशामङ्के कृत्वा सप्रणयजल्पं यदा श्रीकृष्ण आलिङ्गति, तदैव "दावानलेन गोकुलं कवलीक्रियते" इति नन्दवचसा विघ्नितरसयोरपि तयोः पल्लविताऽनुरागयोः प्राप्त्याशा

---

१. अत एव रासे ताम्बूलकल्कप्रसादलक्षणनिरतिशयसौभाग्यभाजनं राधैव भवति, नान्या काचित्। तथा हि षष्ठेऽङ्के विष्कम्भके रासं वीक्ष्य परस्परं तद्वर्णनपरे **यमुना-वनदेवते** --सखि! समाकलय महत्कुतूहलम्—

आलम्ब्योरुतलं वपुः पुलकितं स्विद्यत्कपोलस्थलं
दोस्तम्भं मुरवैरिणाऽतिकुतुकादंसेऽर्पितं बिभ्रती।
प्रोद्यत्पूर्णकलानिधानरुचिरे स्मेरे मुहुः सीत्कृते
राधेयं निदधाति तेन निहितं ताम्बूलकल्कं मुखे॥ (६।१५) इति।

नियताप्तिस्पर्शिनी सञ्जाता। चतुर्थेऽङ्के राधाया अन्तरङ्गसख्या चारुमत्या सखीः प्रति "श्लिष्टैः पदैः पिशुनयेच्च रहस्यवस्तु" इति रीत्या राधामाधवयोरन्तरङ्गविविधसम्भोगशृङ्गारवर्णनेन मुख्यनायिकाया राधायाः फलागमोऽपि व्यञ्जितः।

अत्र प्रतिनायिका चन्द्रावली। यदा राधानिकुञ्जे विहृत्य सम्भोगश्रान्तौ राधामाधवौ निद्राणौ भवतः, तदानीमेव चन्द्रावलीसखीभिरपहृत्य श्रीकृष्णश्चन्द्रावल्याः निकुञ्जं नीयते। तत्र तस्य चन्द्रावल्या समागमवर्णनेन तस्या अपि सौभाग्यलता फलवती जातेत्यभिव्यज्यते। परन्तु चम्पकलतिकादीनामन्यासां च स्वप्रेयसीनां सम्भावनमवशिष्टमासीत्।

पञ्चमे षष्ठे चाङ्के तासां वयस्याभिः प्रस्तुतानामनङ्गपत्रिकाणां वाचनेन सुवचनवचनेन च विप्रलम्भदशां ज्ञात्वा रासविलासप्रसादेन तासां सर्वासां स्मरकलासु कौशलं सफलयितुमध्यवस्य सर्वा अपि समाश्वासिताः। अथ शरत्पूर्णिमायां सायं रासक्रीडार्थमधरसुधाभिरापूरिताया वंश्याः श्रवणसमकालमेव त्यक्तान्यकार्याभिर्व्यत्यस्तवस्त्राभरणाभिरागताभिस्ताभिः सह रासक्रीडादिविहारवर्णनेन मध्येऽन्तर्धानेन च अतिविकलतां गतानां तासां सर्वासां सम्भोगविप्रलम्भात्मकोज्ज्वलदिव्यशृङ्गारस्य देवाङ्गनाभिरपि श्लाघ्यस्य सर्वाङ्गीणवर्णनेनात्र मधुरोज्ज्वलः शृङ्गारो मुख्यरसतया निर्व्यूढः।

यत्तु "इह नायिकानां परकीयात्वेन रसाभासः" इति, तद्विपरीतम्। यतः श्रीकृष्णस्याङ्गभूतानित्यसङ्गिन्य एता रसमय्या लीलाया विस्ताराय तेनैवावतारिताः रसस्य वैचित्र्याय परिपोषाय च योगमायाकृतं तासु परकीयात्वम्। यथोक्तं सुदेवकृते रसविलासे—

नेष्टा यदङ्गिनि रसे कविभिः परोटा
तद्गोकुलाम्बुजदृशां कुलमन्तरेण।
आशंसया रसविधेरवतारितानां
कंसारिणा रसिकमण्डलशेखरेण॥ इति।

उज्ज्वलनीलमणावपि—

लघुत्वमत्र यत्प्रोक्तं तत्तु प्राकृतनायके।
न कृष्णे रसनिर्यासस्वादार्थमवतारिणि॥ इति।

श्रीकृष्णस्य मुरल्यापूरणसमकालमेव तासां दशायाश्चित्रणमेवं क्रियते—

पत्युः प्रेम यशः कुलस्य कुलजावृन्दस्य सम्माननं
सौहार्दं पतिदेवतापरिषदः शीलं बलञ्चात्मनः ।
यस्यास्वादवशेन गोपसुदृशां द्रागेव निःस्वीकृतं
बिम्बीवल्लिफलाधरे मुरलिकागीतं तदुज्जृम्भते ॥ (५।२३) ।

व्यत्यस्ताभरणता च—

वामं नाञ्चितमञ्जनेन नयनं कर्णे न किं दक्षिणे
बाले ! कुण्डलमीक्षसे विगलितां नीवीं विलज्जे न किम् ? ।
नेपथ्यं न समाप्य गच्छसि कथं प्रेमान्धबुद्धे न किं
धत्से कञ्चुकमञ्चलं च कुचयोः काञ्ची कथं चोरसि ?॥ (५।२४) ।

एवमस्य नाटकस्य मुख्यो मधुरशृङ्गारो रसोऽतिसंक्षेपेणात्रोद्दिष्टः । द्विविधस्यापि शृङ्गारस्य असंलक्ष्यक्रमेण व्यञ्जकैः प्रचुरैः पद्यैर्वाक्यैश्चाद्यन्तं परिपूर्णमिदं नाटकं सहृदयाधिकारिणां हृदयानि रसामृतसारसिन्धौ निमज्जयत्, नानानन्दपरिप्लुतान् विधत्तेतराम् । तत्र सम्भोग-विप्रलम्भयोः कानिचिदुदाहरणानि पाठकानां मनोरञ्जनायोपन्यस्यन्ते । पश्यन्तु राधामाधवयोश्चक्षुरागः कीदृक् सरसः—

राधामालोक्य श्रीकृष्णः—"सखे ! किङ्किणीदामन् ! या प्रतिपदोदितकलातिशयितज्योतिर्मण्डलशालिनी विमलमहसामखिलगोकुलविलासिनीनां बहुलतारकाणां राकेव ज्योत्स्नाजालतिरस्करिणी पुरःस्फुरति" ।

अपि च—

साश्चर्यं समुदीक्ष्य सस्मितमतित्रासाकुलेवाञ्जसा
चेलान्तेन पिधाय चारुवदनं तिर्यक् पुनः प्रेक्षते ।
मा मालक्ष्य तदीक्षणार्पितदृशं संवीक्षतेऽन्यां दिशं
केयं नेत्रतरङ्गितेन कुरुते कन्दर्पदर्पोन्नतिम् ॥ (२।२७)

राधाऽपि श्रीकृष्णं सानन्दं विलोक्य स्वसखीं ब्रूते—

अनङ्गस्फीताङ्गाः कति न तरुणा सन्ति जगति
प्रवीणा वा तन्त्रे कति न रतिनाथस्य कृतिनः ।
तथापि प्राचीनैरविगणितपुण्यैर्मृगदृशा-
मयं याशोदेयः प्रियसखि ! दृशोरेति सविधम् ॥ (२।३४)

तयोरन्योऽन्यं किमपि भावभङ्गिमयन्त्रितं निरीक्षणमेव हृदयगतं प्रेम व्यञ्जयत् परस्परं शङ्कां निराकरोति । तथा हि—

**वसुदामा**—भो भोः सखायः ! महत्कौतुकं पश्यन्तु—

अधिमाधवमधिराधं प्रेमविचारे परस्परं मनसा ।
शङ्कापङ्कोद्धरणे जयति धुरीणं निरीक्षणं किमपि ॥ (२।३६)

"विप्रलम्भदशाऽपि तयोः कीदृशी" इति रुचिमती-वनदेवतयोः परस्परोक्त्या ज्ञायते । यथा तृतीयेऽङ्के **रुचिमती**—"देवि ! अद्य सा मे प्रियसखी—

स्वपिति न शयने न वा धरण्यां न च नलिनेषु न पल्लवेषु नाङ्के ।
कलयति सकलं विषेण तुल्यं हरि हरि केन कृतास्ति चित्तशून्या" ॥ (३।१)

सखीभिरतिनिर्बन्धेन व्याधिकारणं पृष्टा अवनतमुखी एवमवादीत्—

"श्यामः कोऽपि कदम्बकाननगतः पूर्णेन्दुबिम्बाननः
किं वा गीतमनेन हन्त मुरलीमालम्ब्य बिम्बाधरे ।
तेन द्रागमृतद्रवेण नितरामार्तर्पितोऽयं जन-
स्तेनैवोद्भटकालकूटशिखिना हा हन्त दन्दह्यते ॥ (३।४)

"अथ श्रीकृष्णस्यापि राधाविरहे कीदृशी दशा" इत्यपि वनदेवतावचनेनावधार्यताम् ।

**वनदेवता**—वत्सोऽपि तदालोकनावधि—

क्रीडासु प्रकटीकृतासु सखिभिर्न प्रीयते प्रीणय-
त्येतान्नो मुरलीस्वनैर्न च परीहासोपयुक्तोक्तिभिः ।
नो रज्यत्यलिगुञ्जितेन च कलं केलीशुकोज्जल्पने
प्राणानामपि रक्षणे प्रतिपदं मन्दादरो नन्दजः ॥ (३।५)

**अपि च**—निशितशल्यकीलितहृदयं क्षत्रियधुरन्धरं धैर्येणावधीरयति । तथा हि—

अस्त्रं तस्करभीतपान्थधनवन्नेत्रान्तरे केवलं
"हा"रावो हृदये परं निशि सरोजान्तर्भ्रमद्भृङ्गवत् ।
श्वासस्तीव्रतरो बहिर्वनभुवः पारीन्द्रवन्मन्मथः
क्रोडे भूमिरुहोऽग्निवन्मधुरिपो राधावियोगावधि ॥ (३।८)

किञ्च, तृतीयेऽङ्के सरसीतटे श्रीकृष्णेन विरहिणीं राधामुद्दिश्य हंसी पृष्टा—"राजहंसि ! अपि दृष्टा सा" ?

**हंसी**—"भो वल्लवराजकुमार ! अवधीयताम्, दृष्टेव सा—

आलीनां गलदश्रुजल्पितशतैर्न स्वल्पमप्युत्तरं-
नाङ्गस्यावरणं क्वचिद् गुरुजनेऽप्यभ्यासमासादिते ।
स्पन्दो मन्दतमोऽपि नैव सुतनोः श्वासोऽपि नाश्वासभू
रोमाञ्चात्परमस्तु जीवितकथा त्वन्नामतो माधव"॥ (३।२७)

अपि चेदानीमेवं शङ्क्यते—

चित्तं चेन्न हृतं त्वदीयचरितैर्मग्नैव चिन्ताम्बुधौ
दग्धैव प्रियविप्रयोगशिखिना चेन्नास्रधारा सरित् ।
प्राप्त्याशाऽपि न चेत्तव प्रियतमा त्यक्तैव जातासुभिः
शान्तैव प्रभुता स्मरस्य भुवने नो चेदियं जीवति ॥ (३।२९)

श्रीकृष्णश्च स्वगतं सवैकल्यं वैवश्यं नाटयन् हंसीं ब्रूते—

अयि चल कुरु यत्नं रक्षण राधिकायाः
बलवति मम पुण्ये किं विधाता विधाता ।
कथय सकलमेतत् पश्यसीहापि यादृक्
श्वसिमि यदि तदाऽहं दास एवास्मि तस्याः ॥ (३।३१)

एवं प्रधानीभूतो मधुरोज्ज्वलः शृङ्गारोऽत्र किञ्चिच्चर्चितः। अतः परं हास्यादीनामङ्गभूतानां भक्तिरसानां चर्चोपक्रम्यते ।

**हास्यरसः**—

नाटकेऽस्मिन् विदूषकस्थानीयो भद्रमुख एव हास्यरसप्रतिमूर्तिः। हास्यमयैर्वचनैः श्रीकृष्णप्रीणनं तस्य नर्मक्रीडासु अन्तरङ्गसाहाय्यं च तत्कर्म। अस्य चैवं परिचयः, यथा—

तनयो गर्गमहर्षेर्विनयप्रणयान्वितो मुरारातेः ।
हास्यरसस्फुरदास्यो भद्रमुखोऽयं न सौख्यकृत् कस्य ? ॥ (१।४९) इति ।

किञ्चास्मिन्नाटके कविना श्रीकृष्णालम्बनक एको हास्यरसमयः सन्दर्भः सकौशलं शृङ्गाराङ्गतया सन्दृब्धः। स चैवम्—चतुर्थेऽङ्के वर्षर्तौ राधिकानिकुञ्जे चिरसम्भोगक्रीडाश्रान्तौ राधा-माधवौ यदा निद्रया मुद्रितनेत्रौ भवतस्तदैव चन्द्रावल्याः सखीभिरागत्य श्रीकृष्णोऽपहृत्य चन्द्रावल्याः सकाशं नीयते। विगतनिद्रा राधिका आत्मानमेकाकिनं लब्ध्वा चिन्तया व्याकुलीभूता। तत्रागताभिः स्वसखीभिः "कथमेकाकिनी असि" इति पृष्टा च सा "सापत्न्य-

वैरान्मम मन्दभाग्याया जीवितं निद्रावस्थायां कयाचिदपहृतम्" इत्युवाच। चन्द्रावल्याः सविध एव श्रीकृष्णोऽस्तीति निर्धार्य राधिका तत्सख्यश्च श्रीकृष्णो यत्र चन्द्रावल्या सह नर्मालापपर आसीत्, तत्समीपस्थकुञ्जेऽन्तरिता भूत्वा तयोर्नर्मालापं शृण्वन्ति। यदा वर्षावर्णनप्रसङ्गे श्रीकृष्णेन "धारा" इत्यस्य स्थाने "राधा" इत्युक्तम्, तदा गोत्रस्खलनेन चन्द्रावली रूढमाना गन्तुमीहते। श्रीकृष्णश्च तामनुनयन् "न राधिकामोदवहा" इत्यादि श्लोकं (४।४५) पठति। किञ्च "दासो यद्यपराधभूः" इति श्लोकं (४।४१) पठित्वा तस्याः पादयोर्निपतति। अस्मिन्नेवावसरे राधिकासख्या आरादुक्तं "राधिका मोदवहैव ते" इति वचनं श्रीकृष्णः शृणोति। "राधा-सखीभिर्ममेदं सर्वं दृष्टं श्रुतं च" इति चिन्तया विच्छायमुखं श्रीकृष्णं विलोक्य चन्द्रावल्या सत्रासमौदासीन्यकारणं पृष्टः श्रीकृष्णः—"प्रिये! कालियनागादप्यतिकराला काचन दुश्चिन्ताकालव्याली लोकमिमं व्याकुलयति, तदनेन पथा निर्गत्य सखीमण्डलं मण्डयतु भवती, यावदहमेनां व्यापादयामि" इति तामुक्त्वा ततो बहिर्निर्गत्य पुरतः सखीसमेतां राधिकां पश्यति।

चन्द्रावल्या सह नर्मालापादिवृत्तान्तमुदाहृत्य तया यावदुपालभ्यते, तावत्प्रागेवाभ्यूहितैतत्परिस्थितिसम्भावनेन श्रीकृष्णेन नियोजितौ धृतचन्द्रावलि—कृष्णवेषौ परस्परं नर्मालापं कुर्वाणौ सुबल-प्रबल-नामानौ श्रीकृष्णसहचरावुपतिष्ठतः। तदा श्रीकृष्णेन "प्रियतमे! नन्वनयोरेव नर्मालापमाकलय्य भवत्याहमपराद्धीकृतः" इत्येवं प्रत्युपालब्धा राधिका सावहित्थकपटक्रोधं सुबलं प्रति—"सुबल! एवमेव वयं परिहसनीयाः? तदितो गच्छामः" इत्युक्त्वा गृहाय प्रस्थिता। एवं मानातिभूमिं प्राप्ताया राधायाः समाधानाय श्रीकृष्णेन पूर्वसम्भावनया विहिता इयं योजना सर्वानेव सहृदयान् मधुरं हास्यरसं समास्वादयति। तस्य च राधिकाया मानापनोदौपयिकत्वाच्छृङ्गाराङ्गत्वम्।

**करुणः—**

यथा सप्तमे गर्भाङ्के वज्रकठोराङ्गाभ्यां कर्कशरणकर्मकुशलाभ्यां चाणूर-मुष्टिकाभ्यां सह शिरीषसुकुमारतरकिशोरयोः कृष्ण-बलयोः ससंरम्भं प्रवृत्ते युद्धे "हतोऽसि रे हतोऽसि" इति चाणूरवाक्यं श्रुत्वा कारुण्याभिभूते **वसुदेव-देवक्यौ**—"हा कष्टम्!—

प्रागावयोर्निहतवान् हतयोः सुतान् षड्
धातुः शठस्य घटनान्नृपतिर्नृशंसः।
हा वत्स कृष्ण! बलदेव! नियुद्धमध्ये
किं वा विधास्यति स वामपि नष्टचेष्टः॥ (७।११९)

इत्येवं ब्रुवाणौ पाषाणकल्पमपि हृदयं कारुण्येन द्रावयतः। किञ्च कृष्णमानेतुमागतमक्रूरं प्रति **यशोदा**–"भो भो दानपते ! किमेतदध्यवसितोऽसि ? यदिह–

कंसः क्रूरः कपटपटवो मन्त्रिणो यस्य दैत्याः
येनाक्रान्तास्त्रिदशपतयोऽप्यन्तकोऽप्यन्तभीत्या।
तस्याभ्यर्णं यदि पुनरयं नीयते क्षीरकण्ठः
कण्ठे प्राणान् क्षणमपि कथं धारयाम्येकपुत्रा" ॥ इति। (७।४५)

**अद्‌भुतः**—

यथा सप्तमेऽङ्के—"आः किमेतत् ?

शिरीषसोदराङ्गेन वज्रपृष्ठातिनिष्ठुरः।
हतः कृष्णेन चाणूरो बलदेवेन मुष्टिकः" ॥ (७।११६)

किञ्च षष्ठेऽङ्के रासक्रीडां वर्णयन्त्यौ **वनदेवताकालिन्द्यौ**—"अहो ! अतिकुतूहलमेतत्—

नृत्यद्भ्रूनयनोत्पलं स्मितमुखं स्विद्यत्कपोलस्थलं
लीलाचञ्चलकुण्डलं भुजलतान्दोलं क्वणत्कङ्कणम्।
त्रुट्यत्कञ्चुकमुल्लसत्कुचतटं तिर्यक् त्रिकं प्रस्खल-
न्नीविव्यञ्जितशिञ्जितं विजयते लास्यं कुरङ्गीदृशाम् ॥" (६।१२)

**अपि च**—जगदुत्तरमिदं नृत्यकलाकौशलम्। यतः—

वनितायुगलावलितो मधुजिन्मधुजिद् युगलावलिता वनिता।
असितैर्मणिभिः कनकावलिभिर्मदनेन कृता किमु हारलता ॥ (६।१४)

अत्र कोटिसंख्यातोऽप्यधिकानां गोपकिशोरीणामुभयोः पार्श्वयोः कृष्णोपलम्भेन कोऽप्यलौकिकोऽद्‌भुतरसो मधुरं रसं पुष्णाति। रासश्रान्ताः कोटितोऽप्यधिकाः कान्ताः प्रत्येकं कृष्णमालिङ्गय वसुधायां शयाना अप्यद्‌भुतं व्यञ्जयन्ति, यथा—

कल्पितवसुधातल्पाः कल्पलताः कोटिसंख्ययाऽनल्पाः।
क्लान्तास्तरुणतमालालम्बिन्यः कान्तिशालिन्यः ॥ (६।१६)

स एषोऽद्‌भुतः शृङ्गाराङ्गः।

**प्रीति-भयानकः—**

द्वितीयेऽङ्के श्रीकृष्णं सानुरागं पश्यन्त्या राधाया विविधा भावाः वसुदाम्ना सविशेषं वर्ण्यन्ते—"सखे श्रीकृष्ण ! किमिदम् ?

राधा त्वद्वदने निधाय नयने मूर्द्धानमाधुन्वती
व्यालोलश्रुतिकुण्डलांशुपटलव्यामिश्रगण्डद्युतिः ।
सिक्तेवोच्छलितेव संगतमहागर्वेव पूर्णेव च
श्रान्तेव भ्रमितेव संभृतभयेवार्तेव संलक्ष्यते" ॥ (२।४०)

यथा वा स्वप्राणेशस्य श्रीकृष्णस्य अन्यासंगाद्भीता राधिका स्वसख्यौ प्रति हृदयभयं प्रकटयति, यथा—

नवपल्लविताः समन्ततो लतिकाः सोत्कलिकाः सहस्रशः ।
मधु तासु पिबन् मधुव्रतः कथमेनामुपयातु यूथिकाम् ॥ (३।३२)

यथा वा पञ्चमेऽङ्के श्रीकृष्णमदृष्ट्वा **गोप्यः**—"हा धिक् ! हा धिक् ! किं नु इदं वज्रायितमापादितम्—

किमिह निलीनः कुतुकात्कयाचिदथवा हृतः कलावत्या ।
अथवा परिचितदोषा निःशेषा रसिकशेखरोऽहासीत्" ॥ (५।५७)

**युद्धवीरः—**

यथा नारदप्रणीततया उपनिबद्धे सप्तमे गर्भाङ्के कंसादिभूमिकाभिः श्रीकृष्णानुरञ्जनं कुर्वतां प्रमथयूथपतीनाम् । तत्र **चाणूरः** कृष्णं प्रति—

श्लोकं कञ्चनसंचयन्नसि चिरादापूतना स्वर्गते-
राभोजेन्द्रकरीन्द्रदर्पदलनं कैस्त्वं न संभाव्यसे ?
तेन स्वर्गमुपैहि सूर्यसुषिरेणोद्दामदोर्दर्प ! भो-
श्चाणूरोऽस्मि चिरेण पुण्यनिचयैर्दृष्टोऽसि तिष्ठ क्षणम् ॥ (७।१०९)

प्रतिभटबलवर्णनपुरस्सरतयोन्नतश्चाणूरभूमिकस्य प्रमथयूथपतिभक्तस्य युद्धोत्साहोऽत्र व्यज्यते । स च—

परस्परविमर्दनोड्डमरकायकाण्डोच्छल-
च्चटच्चटदिति स्फुटध्वनितनिर्जितस्फूर्जथुः ।
अलक्षितगतागतप्रपतनोत्प्रपातक्रमा-
क्रमः स्फुरति संगरः कलय कृष्णचाणूरयोः ॥ (७।११३)

अत्र वर्णितैरनुभावैरसंलक्ष्यक्रमेण वीररसतां नीतः श्रीकृष्णानुरञ्जनार्थं प्रयुक्ततया तत्प्रीतेरङ्गतां भजति ।

**वत्सलः**—

यथा तृतीयेऽङ्के चारकैर्गोपडिम्भैः सह वनादागतस्य श्रीकृष्णस्य मुखक्लान्ति दृष्ट्वा **नन्दः**—"वत्स ! एहि एहि—

प्राणास्त्वमेव हृदयस्य दृशोः प्रमोद–
दीपस्तनोश्च हरिचन्दनपङ्कलेपः ।
भूषाश्रुतेर्मधुरसो रसनस्य वत्स !
क्लान्तिः कथं वदनचन्द्रमसस्तवाद्य ? ॥ (३।१३)

तत्रैव श्रीनन्दमुखेन मातुर्यशोदाया वात्सल्याङ्कनम्, यथा—

मातुर्यथा जगति वत्सलतेह वत्से
नैवंविधा पितुरपि क्व नु सा परेषाम् ।
यस्याः पयोधररसक्षरणच्छलेन
व्यक्तं द्रवीभवति हृत्तनये स्मृतेऽपि ॥ (३।२१)

अपि च आरादागते कृष्णे **यशोदा**—सानन्दमालोक्य स्यन्दमानस्तनी समाश्लिष्य चिबुकमुन्नमय्य मूर्द्धानमाघ्राय च सास्रम्—

यत्ते महेन्द्रमणिदर्पणकान्तिशालि
गण्डद्वयं वदनमिन्दुमधःकरोति ।
किं भोस्तदद्य हिमपातनचूर्णिताचि-
रम्भोरुहभ्रमपदं वद वत्स कृष्ण ! ॥ (३।२३)

**प्रेयोरसः**—

प्रेयोरसस्यात्रालम्बनाः श्रीकृष्णस्य सहचरा गोपाः, भद्रमुखः, अक्रूरः, नारदश्च । किञ्च नारदप्रणीततयोपनिबद्धे सप्तमे गर्भाङ्के तत्तत्पात्रभूमिकामवतीर्णाः सर्वेऽप्यभिनेतारः स्व-स्वभूमिकोचितभावान् पुष्णन्तस्तैरपि प्रेयोरसमेवालङ्कुर्वन्ति । किं बहुना, चाणूर-मुष्टिक-कंसादिभूमिका अङ्गीकृतवतां प्रमथयूथपतीनामपि अभिनयकौशलेन स्व-स्वभूमिकानुसारं युद्धवीराद्युचितोत्साहादिपोषणस्यापि सप्रेयसीकस्य गोकुलेन्द्रनन्दनस्य भगवतः श्रीकृष्णस्य प्रीणनमेव परमोद्देश्यम् । न चैतेषां सामान्याभिनेतृभिः साम्यम् । तेषां सामाजिकप्रीणनद्वारा धनादिसांसारिकविषयोद्देश्येन कौशलप्रदर्शनप्रवृत्तेः । न चैवं प्रेयोरसस्यैव

प्राधान्यान्मधुरश्रृङ्गारस्यात्र प्रतिज्ञातं प्राधान्यमनिर्व्यूढं भवति, प्रेयसीभिः सहितस्य श्रीकृष्णस्यानुरञ्जनोद्देश्यतया इह प्रेयोरसस्यापि मधुरश्रृङ्गाराङ्गतया निबन्धनात् । अत एव भगवता नारदेनाप्यत्र गोपीप्रेम्णामुत्कर्षो वर्ण्यते । यथा षष्ठेऽङ्के **नारदः** गोपीरुद्दिश्य—"कथमासां सौभाग्यातिशयः शक्यो वर्णयितुम् । याभिः—

अवलोकितमनुहसितं तदनु च नतवीक्षितं किमपि ।
एतावतैव निगडितमाभीरीभिः परं ब्रह्म" ॥ (६।५१)

तत्र नारदस्य प्रेयोरतिः, यथा **नारदः**—अञ्जलिं बद्ध्वा सकौतुकस्मितं श्रीकृष्णं प्रति—

कृत्वा कालियदन्दशूकदमनं त्वय्यास्थिते ताण्डवं
तस्योत्तब्धसमस्तमस्तकमणिद्योते समुत्तस्थुषि ।
येनालम्भि विभातभास्करकरप्राग्भारशोभास्फुरद्
रक्ताम्भोजयुगद्युतिः प्रतिपदं तत्तेऽङ्घ्रियुग्मं भजे ॥ (६।५२)

अपि च—

लुब्धस्येव सुवर्णं स्मरविवशस्येव सुन्दरी नर्म ।
क्षुधितस्येव सदन्नं माधव तव नाम मे भूयात् ॥ ( ६।५३ )

इति चरणमूले लुठति । श्रीकृष्णः ससम्भ्रमं कराभ्यामुत्थापयति, आकाशे देवास्तं परस्परं प्रशंसन्ति । यथा—

स्फूर्जन्तस्तपसा पुलस्त्य-पुलहागस्त्यात्रि-दुर्वाससः
सन्तूच्चैर्यशसः परेऽपि मुनयो धन्यः परं नारदः ।
यस्य श्रीव्रजनन्दनन्दनगुणोत्कीर्तिप्रसङ्गे मुहुः
प्रालेयाद्रिविनिस्सृतामरधुनी धारायते स्रावलिः ॥ (६।५४)

अत्र द्रुतचित्तस्य भक्तप्रवरस्य अद्रुतचित्तज्ञान्यपेक्षया अधिकं धन्यत्वमुक्तं भवति । षष्ठेऽङ्के अक्रूरस्य प्रेयोरसं पुष्णदुत्कण्ठावाक्यम् । यथा—

कदा वृन्दारण्योच्छलदमलधूलीषु लुठतो
मम प्रेमा रामानुजचरितचिन्तासु भविता ।
सृजन्नस्रारम्भं पुलकमुकुलालङ्कृततनु-
र्दिवा वा नक्तं वा स्थितमथ गतं वेद्मि न यतः ॥ (७।२५)

वृन्दावने श्रीकृष्णस्य पदचिह्नान्यालक्ष्य श्री-अक्रूरस्य प्रेमभावः कीदृगुद्दीप्तो भवतीति अग्रिमश्लोकद्वये सूत्रधार-पारिपार्श्विकाभ्यां वर्ण्यमानमवधेयम् । यथा—

लक्ष्माणि ध्वज-वज्र-पङ्कज-यव-च्छत्रोद्ध्वंलेखायुता-
न्यालक्ष्याम्बुरुहाक्षपादतलयोः क्षोणीतलेऽह्नाय यः ।
ध्यायत्युत्पुलकत्युदश्वति लुठत्याक्रन्दति प्रीयते
कोऽन्यो धन्यतमस्ततस्त्रिभुवने स्याद्‌गान्दिनीनन्दनात् ॥(७।२७)

अपि च—

धन्यैतस्य जनिः पिता च जननी चैतस्य धन्याधिकं
धन्यैतेन वसुन्धरा किमधिकं चैतेन धन्यं जगत् ।
यः कंसैकनिदेशवर्त्यपि हरेः पादाब्जलक्ष्मेक्षणा-
दक्रूरोऽस्त्रनिरुद्धकण्ठकुहरः प्रेमाब्धिमग्नोऽभवत् ॥ (७।२८)

एवं प्रायः सर्वेऽपि भक्तिरसायने निरूपिता भक्तिरसा मधुरोज्ज्वल-शृङ्गाररसस्याङ्गतया अस्मिन्नाटके अतिकौशलेन निबद्धा भक्तिरसाननुबुभूषून् सहृदयानलमानन्दयेयुः ।

दानवीररसोऽत्र श्रीकृष्णाश्रयक एवौचित्यात्सप्तमेऽङ्के अन्ते निवद्धः। यथा "कंसवध"नामकस्य गर्भाङ्कस्याभिनयसमाप्तौ श्रीकृष्णः सानुकम्पम् अभिनेतॄन् प्रति—"वदन्तु किमभिलषितं भवतामस्मत्तः प्रवन्धकर्तुर्वा भगवतो नारदस्य" ? **सर्वे**—भगवन् !

सन्तः सन्तु निरापदस्तव पदद्वन्द्वे सदास्तां रति-
र्माभूत् कश्चन मत्सरः परगुणैर्नन्दन्तु सारग्रहाः ।
कुर्यासुः कवितास्वनर्गलधियश्चित्रान् प्रबन्धानमून्
भूयांसो विनयन्तु नाट्यकुशलाः पुष्णन्तु विज्ञाश्च तान् ॥ इति ।
( कृ० कु० ७।१४० )

अस्मिन्नेवावसरे **नारदः**—( सप्रमोदम् ) कः प्रसादो मह्यं प्रदेयः ?

**श्रीकृष्ण-रामौ**—"यद्रोचते भवते" । अत्र श्रीकृष्णाश्रयको दानोत्साहः स्फुटमुन्नीयमानो दानवीररसमभिव्यनक्ति । एवमस्मिन्नाटके भक्तिरसायनोक्तोः मुख्यो मधुरोज्ज्वलः शृङ्गारोऽष्टावङ्गभूता रसाश्चातिकौशलेन निबद्धा उद्देशतोऽस्यां भूमिकायां चर्चिताः । किञ्च—

रसान्तरविभावादि राहित्ये तु स्वरूपभाक् ।
दशमीमेति रसतां सनकादेरिवाधिकाम् ॥ (भ० र० २।७३)

इत्युक्त्यनुसारं शुद्धरतिस्थायिकः दशमोऽपि शुद्धो भक्तिरसः शुकसनकादि-स्थितिसाक्षिकोऽङ्गीक्रियते । यथोक्तं भक्तिरसायने—

अनुपाधिः परानन्दमहिमैकनिबन्धना ।
भजनीयगुणानन्त्यादेकरूपैव सोच्यते ॥
विभावादिसमायोगे शुद्धो भक्तिरसो भवेत् ॥ इति ।

सोऽप्यत्र—सप्तमेऽङ्के शुकचर्चया निबद्धः । यथा—

पारिव्राज्यं परिप्राप्तं वेदान्ताः परिशीलिताः ।
तथाप्यसौ हरेर्लीला शुकेन प्रकटीकृता ॥ (७।७) इति ।

एवं स्वकृते भक्तिरसायने लक्षणतो निरूपितानां सर्वेषां भक्तिरसाना-मुदाहरणतयोपनिबन्धनं वश्यवाचा विचक्षणेन कविनाऽत्रालौकिकाऽद्भुतकौशलेन कृतमिति संक्षेपेणात्र दर्शितम् ।

## गुणालङ्काराः

तत्र गुणाः—

काव्ये माधुर्य-प्रसादपक्षपातिनामप्येतेषां वश्यवचसां वाचि रसस्य वर्णनीय-वस्तुनश्च आनुगुण्येन गुणाः प्रकटीभवन्ति । अलङ्काराश्चानन्यसाधारणीं विच्छित्तिं पुष्णन्ति । तत्र प्रसादमाधुर्याभ्यां चितं तर्पयदिदं पद्यद्वयं समाकलयन्तु । यथा द्वितीयेऽङ्के श्रीकृष्णमुखेन चम्पकलतिकाया वर्णने—

साकूतं न वचो दृशौ न तरले वक्षस्थलं नोन्नतं
न स्मेरं वदनाम्बुजं न च शिरश्चेलाञ्चलेनाञ्चितम् ।
किन्त्वङ्गानि कुरङ्गशावकदृशस्तान्यद्य नेत्राध्वना
चित्तप्राङ्गणसंगतानि दधते यूनामनङ्गोत्सवम् ॥ (२।१२)

एवं कामाङ्कुराया वर्णनेऽपि । यथा—

शैशवं तरुणिमा च भूभुजौ
चापलं मधुरिमा च मन्त्रिणौ ।
सुभ्रुवो वपुषि पश्य संगरे
सङ्गिनौ न जयिनौ न भङ्गिनौ ॥ (२।१३)

अनयोः पद्ययोरर्थेन व्यज्यमानरसगतो माधुर्यप्रकर्षोऽनुगुणैः शब्दैरभिव्यक्तः सहृदयहृदयानि विद्राव्य रसेनैकीकृत्य कीदृगानन्दयतीत्यत्र सहृदयानुभव एव साक्षी।

माधुर्यप्राधान्ये चास्मिन् पद्ये विलोक्यताम्, यथा रसतरङ्गिण्या वर्णने—

इयमनङ्गमतङ्गजसङ्गिनी सुरतरङ्गतरङ्गतरङ्गिणी।
वहति कुम्भयुगं स्तनकैतवात्तनुरुहालिमिषेण लसत्करम् ॥ (२।१७)

एवं श्रीकृष्णचाणूरयोः संगरवर्णने ओजोबन्धच्छटा निभालनीया। यथा—

परस्परविमर्दनोड्डमरकायकाण्डोच्छल—
च्चटच्चटदिति स्फुटध्वनितनिर्जितस्फूर्जथुः।
अलक्षितगतागतप्रपतनोत्प्रपातक्रमा—
क्रमः स्फुरति संगरः कलय कृष्णचाणूरयोः ॥ (७।११३)

अत्रौजोमयो विकटो बन्धः ओजःप्रधानं मल्लयुद्धमनुकरोतीव। एवं कंसमुखेन तत्खड्गवर्णने कर्णकटुभिर्वर्णैः खड्गस्य कटुताप्यनुकृतेव लक्ष्यते। यथा—

सुरकरटिघटोद्यत्प्रोद्भटाटोपदीव्यद्
विकटकटकरोटी कूटकूटैकटङ्कः।
प्रकटितशतकोटित्रोटितद्विड्विडौजः
स्फुटमद-भटकण्ठाकुण्ठनात्योऽसिरेषः ॥ (७।१३३)

अत्र वक्तुर्वर्ण्यस्य च अनुरूप एव ओजोमयः कठोरो विकटबन्धः। एवमत्र प्रतिपद्यं प्रतिगद्यं च माधुर्यादयो गुणा रसानुगुण्येनानुरूपैर्वर्णैरभिव्यज्यमानाश्चकासति।

## अलङ्काराः

यद्यप्येतेषामलङ्काराणां योजनेऽभिनिवेशो नास्ति, तथापि रसव्यञ्जनाय प्रवृत्तैतेषां वाक् स्वारस्यादेव यथोचितमलङ्कारान् बिभर्ति। यथा चोक्तमेतैरादावेव सूत्रधारमुखेन—

राधेव सरसा यस्य गुणालङ्कारशालिनी।
विना कृष्णं न पुष्णाति रतिं वाग्वरवर्णिनी ॥ इति। (१।७)

अत्र सरसा गुणालङ्कारशालिनी वरवर्णिनी राधा यथा कृष्णालम्बनामेव रतिं पुष्णाति, तथा एतेषां वागपीत्यर्थः। श्लेषानुप्राणितयोपमयालङ्क्रियमाणो मधुरश्रृङ्गारप्रवणां राधिकारतिमिवैतेषां प्रेयोरतिमसंलक्ष्य क्रमेणाभिव्यनक्ति। श्लेषानुप्राणितोपमाया विच्छित्तिश्चेयमनन्यसाधारणी। एका अपराऽपि उपमालङ्कारच्छटा समीक्षणीया, यथा मथुराप्रवेशसमये श्रीबलराममुखेन सरोवरवर्णने—

महेन्द्रमणिभिः क्वचित्कमलरागसारैः क्वचित्
क्वचिद्विमलहीरकैर्घटितघट्टनिःश्रेणिकम् ।
समाश्रितजनश्रमं हरदुपेतरूपत्रयं
सदैकरसमव्ययं विजयते सरो ब्रह्मवत् ॥ (७।५८)

अत्र समाशिश्रयिषुजनस्वभावगतत्रिविधरागरूषिततया त्रैरूप्येण भासमानं ज्योतिर्मयं ब्रह्मणो रूपं यथा लब्धं सद्विद्यालक्षणं श्रममपनयन्नित्याव्ययानन्दैकरसरूपेण विराजते, तथेदं सरोऽपीन्द्रनीलादिमणिघटितघट्टनिःश्रेणिद्वारा प्राप्तं सत्तापाङ्गशैथिल्यादिलक्षणं श्रमं हरद्विजयते। अत्र पूर्वार्द्धे उदात्तालङ्कारोत्था चमत्कृतिरुपमामाहात्म्यज्योतिषि तथा विलीनेव प्रतिभाति, यथा ब्रह्माकारा बुद्धिवृत्तिर्ब्रह्मज्योतिषि। अथाग्रे "सारा"लङ्कारो व्यञ्जकार्थद्वारा मधुरं शृङ्गारं कथं शृङ्गारयतीति विलोकनीयमेव। यथा तृतीयेऽङ्के **श्रीकृष्णः**— "सखे भद्रमुख ! अलं प्रहसनेन। किन्त्ववधीयताम्—

साम्राज्यं मदनस्य वामनयनास्तत्रापि नव्याः परं
नव्यासु व्रजसुभ्रुवः स्मरकलालावण्यकेलीभुवः।
तन्मध्येऽपि शिरीषसोदरतनुः प्राणाधिका राधिका
राधायां च मुखं मुखेऽपि किमपि स्निग्धस्मितालोकितम् ॥
(३।३९)

प्रथमेऽङ्के सदन्तक-नलकूबरयोर्वाग्व्यवहारे वक्रोक्तिच्छटा मूल एव द्रष्टव्या। द्वितीयेऽङ्के कामाङ्कुराया वयःसन्धिवर्णने मालोपमाया विच्छित्तिरप्यन्यसाधारणी न भवति, यत्रोपमानरूपेण कृषीबलावपि गृहीतौ। पश्यन्तु—

कृषीबलाभ्यामिव मध्यसीमा
सन्ध्येव सूर्येन्दुकराञ्चलाभ्याम् ।
मृगेक्षणा शैशवयौवनाभ्यां
संरक्ष्यते स्वाम्यधिया न सम्यक् ॥ (२।१४)

एवमस्मिन्नाटके प्रायः प्रतिपद्यं बहुत्र गद्येष्वपि रसप्रवणा अलङ्कृति-चमत्कृतिः सहृदयानां चेतांसि चमत्कुर्वती चकास्ति। किञ्चास्य सर्वाणि पद्यानि चेदलङ्कारदृष्ट्या समीक्ष्येरंस्तर्हि एकोऽप्यलङ्कारोऽसमीक्षितो नावशिष्येतेति प्रतीमः।

एवमत्र तत्र तत्र प्रकृतिवर्णनं वसन्त-ग्रीष्म-प्रावृट्-शरदामृतूनां वर्णनम्, नगरवर्णनप्रसङ्गे आराम-सरो-हर्म्याश्व-गज-शस्त्र-भट-यज्ञ-वेदशास्त्र-दर्शन-रत्न-विपणि-प्रपापाली-मालिनी-मणिविक्रयिणी-नागर-नागरीणां च हृद्यं वर्णनकौशल-मानन्दमग्नानि विधत्तेतरां सहृदयपाठकानां मनांसि। सर्वमेव रुचिरम्। तत्र कस्यचिन्नगरतरुणस्य मालिकमहिलायाश्चान्योन्यं सस्मितं वाग्विलासकौशलं समाकलयन्तु—

**नागरतरुणः**—

"सप्तभिः सरसिजैरलङ्कृतां देहि मे सुतनु चम्पकस्रजम्"।

**मालिक-महिला**—

"ईदृशी क्व तव भोग्ययोग्यता रे विमुग्ध ! कलयात्मसम्पदम्"॥ (७।८५)

एवं विवदमानयोस्तयोः स्रक्कर्षणेऽन्योन्यपाणिग्रहपुरस्सरं कल्पितरोषयो-र्वाग्व्यवहारोऽपि अतिकौशलेन निबद्धः समीक्षणीयः। यथा—

जहिहि जहिहि नास्या वेत्ति मूल्यं भवादृग्
वितर वितर मुग्धे ! दीयते यत्तवेष्टम्।
इति न विरमतः स्रक्कर्षणेऽन्योन्यपाणि-
ग्रहमनुकृतरोषं नागरी नागरश्च॥ (७।८६) इति।

## व्याकरण-व्युत्पत्तिः

स्वस्था व्याकरणव्युत्पत्तिस्तु इह प्रतिवाक्यं स्फुटैव, परन्तु क्वचित्क्वचि-दिमनिजादीनां सान्द्रप्रयोगच्छटा विशिष्टां वैदग्धीं व्यनक्ति। यथा तृतीयेऽङ्के **चारुमती** राधामाधवयोराकारं विदित्वा स्वगतं ब्रूते—

रहसि प्रथमसमागमरभसिनि राधामधुद्विषोः किमपि।
द्राधिमकुटिलिमतरलिम-मधुरिम-गरिमाक्षिपद्मयोर्जयति॥ (३।४३)

एवं वंशीस्वनं विशेषयन्तः सान्द्रतया प्रयुक्ताः शत्रन्ता अपि व्याकृति-व्युत्पत्तिं व्यञ्जयन्ति। यथा—

ग्रावाणं द्रवयन् द्रवं कठिनयन् सस्पन्दमस्पन्दयन्
दावाग्निं हिमयन् हिमं दहनयन्नज्ञानयन् ज्ञानिनः।
पीयूषं विषयन् विषं च सुधयन् निर्जीवितं जीवयन्
संजातः कुलजायशोऽद्रि कुलिशः कोऽप्येष वंशीस्वनः॥ (३।३७)

## शास्त्रान्तराणां व्युत्पत्तिः

प्रायः सर्वेषां शास्त्राणां दर्शनानां च सिद्धान्ता अत्र प्रसङ्गत औचित्या-दुपनिबद्धा ग्रन्थकृतां सर्वशास्त्रविषयिणीं व्युत्पत्तिमभिव्यञ्जयन्ति। यथा कृष्णः राधां प्रति–"प्रिये मय्यपि सन्निहिते कथमेकाकिता भवत्याः? आ ज्ञातम्, सत्यमेकाकिता भवत्याः, यन्मामभिन्नमेव प्रत्येषि। मम तु इत्थं विचारयतो निश्चयपदवीं नाधिरोहसि। यतः–

नाभिन्ना प्रणयक्रोधाद् भिन्ना नाभेदबुद्धितः।
भिन्नाभिन्नाविरोधान्न त्वं त्वमेवासि मे प्रिये!" ॥ (३।४८)

सप्तमेऽङ्के मथुराप्रवेशसमये वेदविद्या विदुषां सदनेषु[1] ऋचो-वाचां वीचिभिः यजुषामुच्चैःपाठेन, साम्नाममृतमयगानेन च शृण्वतां जनानां चेतांसि आनन्दमग्नानि भवन्ति। किञ्च क्वचिन्मीमांसानां श्रुतिविषयमीमांसनम्, क्वचित्सांख्यानां तत्त्वसमीक्षा, अन्यतो वेदान्तानां प्रतिवचनसिद्धान्तनम्, पुराणादिविद्यानां रहस्यवर्णनं च समीक्ष्य सुरगुरुनिवासोऽपि लज्जते। नैयायिका-स्त्वेवं विशिष्य वर्ण्यन्ते, यथा—

अमी पञ्चाध्यायीमयविपिनसञ्चारचतुराः
परिस्फूर्जल्लञ्चावयवचयदंष्ट्राश्छलसटाः।
सदोदञ्चत्तर्कप्रखरनखरा धीरहरयः
परित्रस्ता येभ्यः सुरगुरुमुखावादिकरिणः॥

---

१. ऋचोवाचां वीची श्रुतियुगलमोदं वितनुते
यजुःपाठोऽप्युच्चैर्मनसि परमानन्दविभवम्।
इदं गीतं साम्नां बलदमृतपूरेऽखिलवपु-
र्निमग्नं केषां वा जगति जनितानां न कुरुते॥ (७।८९)
इतो मीमांसानां श्रुतिविषयमीमांसनमितः
समीक्षा सांख्यानां मतमलघुवैशेषिकमितः।
इतो वेदान्तानां प्रतिवचनसिद्धान्तनमितः
पुराणाद्या विद्या त्रपयति निवासं सुरगुरोः॥ (७।९०)

एवमस्मिन्नेवाङ्के अग्रे श्रीकृष्णेन चाणूरे हते सभासदां मध्याद् विभिन्नैर्दार्शनिकैः स्व-स्वसिद्धान्तानुसारं श्रीकृष्णस्योल्लेखो यथा—केचित्सनिदिध्यासनम्—

सजातीय-विजातीय-स्वगत-द्वैतवर्जितम् ।
यद्ब्रह्मोपनिषद्वेद्यं तद्धामेदं विराजते ॥

अन्ये सतर्कपरामर्शम्—

जन्यप्रयत्नाजन्यानां जन्यानां समवायिनाम् ।
कर्ता धर्ताऽथ संहर्ता योऽनुमेयः स राजते ॥

अपरे सानन्दानुभवाभिनयम्—

न क्लेशैः कर्मभिर्वापि न विपाकैर्न वाऽऽशयैः ।
यः परामृश्यते कश्चित्तं नमस्कुर्महे पुरः ॥

इतरे समीमांसनम्—

शंसन्त्येनं मन्त्रमयं मीमांसानयमांसलाः ।
सांख्यसंख्यावतामस्मिन्नादिविद्वानिति ध्वनिः ॥

अपरे सचमत्काररोमाञ्चम् —

याज्ञिका यज्ञपुरुषं वैष्णवाः पुरुषोत्तमम् ।
निरावरणमप्येनं संगिरन्ते दिगम्बराः ॥

केचित्सात्मश्लाघम्—

लोकवेदविरुद्धैरप्यलिप्तः कामकर्मभिः ।
अस्मत्तन्त्रे स्वतन्त्रो यः स पशूनामसौ पतिः ॥

केचन सप्रत्यभिज्ञम्—

शिवः शैवैर्विश्वकर्मा शिल्पकल्पितजीवनैः ।
सर्वज्ञश्चैष विज्ञेयः सौगतागमकोविदैः ॥

अन्ये बलं प्रति सस्निग्धापाङ्गतरङ्गितम्—

शरच्चन्द्रस्फुरद्रोचिः शोणराजीवलोचनः ।
वसुन्धराया धर्ताऽयमनन्तः शब्द्यते बुधैः ॥ (७।११७-१२४)

एवमत्र बहुशस्तत्तच्छास्त्रीयाः सिद्धान्ताः प्रसङ्गतो व्यवहृताः सन्ति। यथा द्वितीयेऽङ्के—

**कृष्णः**—"सखे ! केयं सकलगुणालङ्कृता मूलप्रकृतिरिव प्रधानपदाभिधेया पुरतो राजते"।

**भद्रमुखः**—"सखे ! नैतैः प्रत्यूहशङ्का, यतः कन्यायां हस्तयोगः प्रतीयते। मिथुने च मङ्गलप्रचारः। ततो निश्चितो वनयोगः"।

**कृष्णः**—"अयि ! भवत्यैवानुभवसामग्र्या स्मृतिरपहृता"।

एवं तृतीयेऽङ्के राधिकाविरहे पटीरादिषु दाहकतामनुभवन् श्रीकृष्णः कथयति—

पटीरः कर्पूरं हिमरुचिकरश्चन्दनगिरेः
समीरश्चोशीरं शिशिरमिति धीरस्य न गिरः।
प्रियायाः सम्पर्के यदपि हिमतामीषु सहजं
न तन्मन्ये वह्निष्विव जयति सिद्धौषधिरसे ॥ (३।७)

पटीरादीनां सहजा दाहकताशक्तिः प्रियासम्पर्केण प्रतिबद्धा आसीत्। इदानीं प्रतिबन्धकाभावे साऽनुभूयते, इति प्रतिबन्धकतावादोऽत्र व्यवहृतः। एवञ्च ग्रन्थकृतां सर्वतन्त्रस्वातन्त्र्यं स्फुटमवगम्यते।

## शङ्का-समाधाने

एवमाद्यन्तं रसमयीभिर्विविधवैचित्रीभिर्विभूषितमिदं नाटकं समीक्षमाणानां सामान्यजनानां चेतसि इयं शङ्का स्थानमासादयति, यद् आशैशवं विषयविमुखैः प्रथमाश्रम एव गृहीतसंन्यासदीक्षैः श्रीमधुसूदनसरस्वतीमुनिवर्यैः श्रीकृष्णलीलामया अपि गोपसुन्दरीणामानङ्गविलसितीनां मधुराः सूक्ष्मसूक्ष्मा अन्तरङ्गप्रकाराः वैशद्येन कथमलमवर्णिषत ? न ह्यननुभूयैवं कथमपि वर्णयितुं शक्यते इति।

अस्याः शङ्कायाः समाधानमतिकौशलेन नाटककृद्भिर्मुनिवर्यैरत्रैव विहितं विलोकनीयम्। तच्चेत्थम्—अस्मिन्नाटके प्रथमाङ्कादारभ्य षट्स्वङ्केषु श्रीकृष्णस्य मधुरश्रृङ्गाररसपूर्णाः कैशोरतारुण्यलीला एव प्राधान्येन विस्तरतो वर्णिताः सन्ति। पूतनामोक्षादीनि बाल्यविक्रीडितानि तु तत्र-तत्र नाममात्रेणोद्दिष्टानि सन्ति। सप्तमे कंसवधनामके चाङ्के कंसादिवधलीला भविष्यद्रूपा नाट्यतयोपनिबद्धा। तेन पूर्वभागस्य अङ्कषट्कस्य नारदप्रणीततया "**मदनविनोदनं**

**नाम नाटकम्"** इति संज्ञा कृता । सप्तमस्य गर्भाङ्कस्य च **"कंसवधम्"** इति । अस्मिन्नेव प्रसङ्गे सुदर्शनः स्वभार्यां कान्तिमतीं ब्रूते—"यदतीतरात्रौ भवत्यामत्यर्थमधुपानादसंवित्तिस्वापवत्यां···मया भवतीं विनैव इन्द्रसभामुद्दिश्य गमनं कृतम् । तत्र समस्तवृन्दारकवृन्दसहितस्य पुरन्दरस्य पुरस्तात् चित्ररथेन गन्धर्वराजेन उर्वशीपुरस्सराभिरप्सरोभिः समं तत्रभवतः श्रीनारदस्य कृतं **"मदनविनोदनम्"**नाम नाटकम् अभिनीतम्, यस्मिन् करतलमिलिताऽमलमुक्ताफलमिव सकलं कुसुमशरकेलिविलसितं गोकुलभूमिपालतनयस्य भगवतो रतिचातुरीप्रवीणासु नवीनासु गोपवामनयनासु तासां च तस्मिन्ननुपदमुपपादितम्" ।

**कान्तिमती**—"इदं साक्षादेव वीक्षितं राधिकापुरोगमाभिः समं भगवति विहरति विमानचारिणीभिरस्माभिः" । ( सकुतूहलस्मितसंवरणम् ) "सुभग ! किमपि जिज्ञासितुं समुल्लसितास्मि । यतः—

अपृष्टे संशयात्कष्टं प्रष्टुं त्वत्तो बिभेम्यहम् ।<br>
प्रश्नाप्रश्नविकल्पाभ्यां तृतोयं कष्टमागतम्" ॥ (७१३)

**सुदर्शनः**—भामिनि ! भीरुता तावद्भवतीनां स्वाभाविकी, तथापि शंस निःसाध्वसम् ।

**कान्तिमती**—( साकुञ्चनस्मितम् ) "नायक ! तावद् धीरधुरन्धरेण तेन वीतरागेण **मदनविनोदनं** नाम नाटकं प्रकटीकृतम् । कथं चाशैशवाद् विषवद् विषयसुखमनङ्गीकुर्वता आभीरकुरङ्गीदृशामानङ्गीविलसितिः साङ्गोपाङ्गं निरणायि । न ह्यनास्वादितकर्पूरस्य कदाचिदास्यादाविर्भवति तद्गन्धानुबन्धी गन्धवाहः" ।

**सुदर्शनः**—( सकौतुकहासम् ) "मुग्धे ! बुध्यस्व, भगवतः श्रीकृष्णस्य प्रेमगरिमविलसितमेतत् । तथा हि—

धीरैकधीरोऽपि मुकुन्दभक्त्या<br>
रसोपचित्योत्तरलो न चित्रम् ।<br>
किमिन्दुकान्त्या वलितोऽम्बुराशि-<br>
र्गम्भीर्यसारोऽपि बिभर्ति धैर्यम् ? ॥ (७१४)

**अपि च—**

कुमुदं विमुदं कुरुते तमः समस्तं सदोषमस्तमयम् ।<br>
भासयते भुवनगतं भक्तिर्विष्णोर्गभस्तिरिव भानोः ॥ (७१५)

अपि च—

प्रभवति कृष्णप्रेमा प्रागेवोन्मथ्य सकलमज्ञानम् ।
प्राचीनाचलशिखरं चुम्बति चन्द्रोऽनुदस्य किं तिमिरम् ? ॥ (७६)

( सकषायहासम् ) अयि विद्वन्मन्ये ! किमन्यत्कथनेन, किमेवमाशङ्कमाना शुकदेवमेव नाकलयति भवता । यदिह—

पारिव्राज्यं परिप्राप्तं वेदान्ताः परिशीलिताः ।
तथाप्यसौ हरेर्लीला शुकेन प्रकटीकृता" ॥ (७७)

एवमुक्ता कान्तिमती मनसि तुष्टा सती सभयविनयमाह—"प्राणेश ! किमतिशेषेण, कियान् विवेकोऽस्माकं शास्त्राचारविवेकविधुराणां स्त्रीणाम्" इति । अनेन सन्दर्भेण उत्थापितायाः शङ्कायाः समाधानं स्वयमेव ग्रन्थकृद्भिः सम्यक्तया कृतम् । मन्ये एतेषां समक्षमेवेयं शङ्का कैश्चिदुत्थापिता स्यात्, यस्याः समाधानमत्रेत्थमुपनिबद्धमिति ।

अपराऽप्याशङ्का—

ग्रन्थस्यास्य समीक्षायाम् एका अन्याऽप्याशङ्का उत्तिष्ठते । सा चेत्थम्—श्रीकृष्णस्य गोपसुन्दरीभिः सह युवावस्था सम्भाव्या एव, लीलाविलासा अत्र प्राधान्येन प्राचुर्येण च वर्णिताः सन्ति । अस्य प्रेयस्यो गोप्योऽप्येनं तरुणमेव पश्यन्ति । यथा राधा श्रीकृष्णं विलोक्य स्वसखीं ब्रूते—

अनङ्गस्फीताङ्गाः कति न तरुणाः सन्ति जगति
प्रवीणा वा तन्त्रे कति न रतिनाथस्य कृतिनः ।
तथापि प्राचीनैरविगणितपुण्यैर्मृगदृशा-
मयं याशोदेयः प्रियसखि ! दृशोरेति सविधम् ॥ इति ।
( २।३४ )

एतेन "कामतन्त्रप्रवीणेभ्यः कामाधिकसुन्दरेभ्यः सर्वेभ्यस्तरुणेभ्यः श्रेष्ठतमः श्रीकृष्णः" इत्येवं रूपं गोपसुदृशस्तं पश्यन्तीत्यभिहितं भवति । अत्र "एकादशसमास्तत्र गूढार्चिः सबलोऽवसत्" इति तृतीयस्कन्धस्थश्रीमद्भागवतशास्त्रवचनेन विरोध आपतति । षोडशात्परमेव युवावस्थेति स्मरणात् । तथा च स्मृतिः—

आपञ्चवर्षाद् बाल्यं स्यात् पौगण्डं नववर्षतः ।
आषोडशाच्च कैशोरं यौवनं च ततः परम् ॥ इति ।

एवञ्च गोकुले युवावस्थासम्बन्धिलीलावर्णनं शास्त्रविरुद्धं कथं कृतम्? इत्याशङ्का स्फुटमुदेति। इयमाशङ्काऽपि ग्रन्थकृद्भिरेवान्यत्र द्विधा समाहिता। अलुप्तसर्वशक्तिकस्य श्रीकृष्णस्य एकादशसमाभ्यन्तरेऽपि तत्तल्लीलानुरूपाऽवस्था-प्राकट्यम्, इत्येकं समाधानम्। यद्वा "एकादशसमा गूढार्चिस्ततः परं प्रकटार्चिः" इति व्याख्येयम्। वयोऽन्यथाऽनुपपत्तिरेवात्र प्रमाणम्। अस्मिंश्च पक्षे उपनयनं द्वाविंशे वर्षे विज्ञेयम्। न चान्यथाकल्पने प्रमाणमस्ति, इत्यपरं समाधानम्। इदं समाधानद्वयं श्रीमधुसूदनसरस्वतीमुनिवरैः श्रीवोपदेवप्रणीतहरिलीलामृतस्य दशमस्कन्धस्थस्य—

प्राकट्य-बाल्य-पौगण्ड-कैशोर-प्रौढिभेदतः।
पञ्चधा गोकुलकृतं तच्च कंसवधाभिधम्॥

इति श्लोकस्य टीकायामुक्तमित्यवधेयम्। नाट्यशास्त्रदृष्ट्यापि सन्ध्याद्यङ्ग-चतुरस्रमिदं नाटकमिति शास्त्रज्ञैरनुभूयेतैव, विस्तरभयादेवात्र मयैतद्विवेचनं न प्रक्रम्यते। किन्त्वेकमनन्यसामान्यं वैशिष्ट्यमुल्लेख्यमेव, यत्पात्राणां येषां सूक्ष्म-सूक्ष्मतमानुभावानां निर्देशनमत्र कविना कृतम्, तेषामभिव्यञ्जनं कर्तुं कुशलैः कृताभ्यासैरपि तैस्तैरभिनेतृभिः कथं पार्येतेति नाट्यशास्त्रप्रवीणैः सहृदयैर्विद्वद्भि-र्विभावनीयम्। तच्च यथा—

**कृष्णः**—(सचमत्कार-पुलकास्रम्) पृ० ४५।

**सख्यः**—(सानन्दोत्साह-पुलक-प्रत्यभिज्ञम्) पृ० ४९।

**राधा**—(सानन्द-पुलक-स्तम्भ-स्वेद-सचमत्कार-प्रणयम्) पृ० ५२।

**राधा**—(ससाध्वसानन्दाद्भुतवैलक्ष्यं तिर्यङ्निरीक्ष्य) पृ० ५३।

**राधा**—(सुधाह्लदनिमग्नेव मुदमभिनीय सविनय-प्रणय-स्मिताकुञ्चन-मन्दाक्ष-मन्दाक्षरम्) पृ० ५४।

**चन्द्रावली**—(सप्रमोद-वैलक्ष्यावहित्थम्) पृ० ६६ इत्यादि।

अन्ते च कीदृशमिदं नाटकम्? इति प्रश्नस्योत्तरे ग्रन्थकृतामेवेदं वचन-मुदाहरामः—"भगवन्! कथं ब्रूमः? यदिक्षु-क्षीर-माक्षिकादिमाधुर्यवद् रस-ज्ञाऽनुभवैकसाक्षिकं हि तत्" इति।

एवमत्र प्रस्तावनायां क्रमेण—(१) कविपरिचयः, (२) स्थितिकालः, (३) ग्रन्थनिर्माणम्, (४) नाटकीयकथासारः, (५) कथामूलम्, (६) पात्रपरिचयः,

(७) रसाः,(८) गुणाः, (९) अलङ्कााराः, (१०) व्याकरणव्युत्पत्तिः, (११) शास्त्रान्तरीयव्युत्पत्तिः,(१२)शङ्कासमाधानम्, इतीमान् द्वादशविषयानधिकृत्य यथामति संक्षेपेण यथावश्यकं विवेचनं प्रस्तुतम्। मन्ये स्थालीपुलाकन्यायेनात्रोदाहृतानंशानास्वाद्य प्राप्तपरिचयाः सहृदयाः पाठकाः सम्पूर्णमिदं नाटकं पठितुं रोचयेरन्निति। किञ्च दाक्षिण्य-माधुर्यौदार्यादिगुणालया महान्तः कृतिनोऽत्र सुलभानस्मदीयान्दोषानात्मसात्कृत्य सारं प्रकाशयन्तो विजयेरन्निति च।

स्नेह-प्रसाद-शुचिता-मधुरत्व-शैत्य-<br>
सम्पद्वती बुधसभा मम वाग्विचारे।<br>
धारेव देवसरितो भविता रसज्ञा<br>
सम्मोदिनी सति कषायरसोपयोगे॥

इति निवेदयते—

हरिशङ्कर-ओझाः<br>
सम्पादकः

वाराणस्याम्,<br>
वसन्तपञ्चम्याम्<br>
२०४६ तमे वैक्रमाब्दे

श्रीमत्परमहंसपरिव्राजकाचार्यमधुसूदनसरस्वतीविरचितं

# कृष्णकुतूहलम्

॥ [1]श्रीगणाधिपतये नमः ॥

॥ श्रीनृसिंहो जयति ॥

श्रीमत्परमहंसपरिव्राजकाचार्यमधुसूदनसरस्वतीविरचितं

# कृष्णकुतूहलम्

## ॥ अथ प्रथमोऽङ्कः ॥

❀ ❀ ❀

नीलां कञ्चुलिकां विमुञ्च कुचयोरास्तां सरोजेक्षणे
मुक्ताहारलता रथाङ्गयुगलश्रीशालिनी स्वर्द्धुनी ।
इत्याभाष्य विमुक्तकुन्तलकुलच्छायां करेणामृशन्
राधाया विनते स्मिताननविधौ स्मेरो हरिः पातु वः ॥ १ ॥

**अपि च—**

प्रेम्णा कन्दलितं दृशोर्विलसितेनोल्लासितं प्रस्खल-
द्वक्षोजाञ्चलनीविबन्धवितथीभावेन सिक्तं मुहुः ।
साकूतस्मितसम्पदाकुसुमितं विश्रब्धकेलिश्रिया
गोपीनां फलितं स्तुवीमहि हरेः कन्दर्पकल्पद्रुमम् ॥ २ ॥

**अपि च—**

केलीतल्पमुपेयुषः सरभसं[2] प्रेक्ष्योरसि प्रेयसः
क्रीडन्तीं निजमूर्तिमुत्पु[3]लकितामुत्कम्पि बिम्बाधरा ।
ताम्रानम्रमुखेन्दुशून्यहसितं तं वीक्षमाणात्मनो[4]
वक्षस्युत्पुलकं निमेषविकलं पायात् प्रिया श्रीपतेः ॥ ३ ॥

---

१. "श्रीगणाधिपतये नमः ॥ श्रीनृसिंहो जयति" ॥ अयं पाठो 'बडौदा' पाण्डुलिपिस्थः । 'एसियाटिक सोसाइटी कलकत्तास्थपाण्डुलिप्यां तु "श्रीगणेशाय नमः" इत्येताव-न्मात्रमेव ।

२. "सरभुवं" इति 'ए' पु० पाठोऽसंगतार्थः ।

३. 'ब' पुस्तके "मुक्रि शुतम्म (?) यामुत्कंपि बिंबाधरा" इत्येवं लेखः । 'ए' पुस्तके "मुज्झित भुया"मिति पाठः, तदनुसारेण च 'उज्झितभयामित्येवं पाठः शोधनीयः' सं० ।

४. 'ब' पुस्तके 'त्मना' इत्येवं लेखः । 'ए' पु० 'त्मनो' इति ।

( नान्द्यन्ते सूत्रधारः )

अलमतिविस्तरेण । अद्य तावत् कमलालयाकुचकलशाङ्ग[1]रागकुरङ्ग-नाभिपूरेण [2]सकलदिविषन्मौलिमन्दारमालालङ्क[3]रणनीलमहोपलेन वाराणसी-वरवर्णिनीकण्ठाभरणीकृतसुरतरङ्गिणीमुक्तालतेन्द्रनीलाङ्कुरतरलेन जगदानन्द-कन्देन भगवता बिन्दुमाधवेन स्वप्नान्तराले समाज्ञया समनुगृहीतोऽस्मि यद्भव[4]द्भिः कृष्णकुतूहलं नाम प्रवन्ध[5]मभिनयद्भिः स्वीयभुवनरञ्जनाभिधानो-चितमाचरणीयमिति ।

अपि च—

स्वकण्ठालम्बिनीमिन्द्रनीलाचलस्यन्दमानमन्दाकिनीमन्द[6]तां [7] दधानोऽत्र बद्धकारुण्यः स्वभक्तहस्तेन माला[7]मिमां प्रापितवान् । येयं—

औ[8]ज्ज्वल्ये व्रजराजनन्दनयशोवल्लीव मालासुख[9]-
स्पर्शे तच्चरणोपमा[10] परिमले तुल्या तदास्यानिलैः ।
हृद्य[11]त्वे ग्रथने द्रढि[12]म्न्यपि गुणद्राघिम्नि गोपीजनै-
स्तस्य क्रीडनवन्मिथः कथनवत् संश्लेषवत् प्रेम[13]वत् ॥ ४ ॥

अपि च—

अस्मद्भाग्योपचयादेवामी वैष्णवाः सभाशोभां पुष्णन्तः सकलकलाकम-लिनीभानुमन्तः समायान्ति । समुचितं चैतत्—

धातुर्वक्त्रसरोजतः प्रथमतो या नारदेनाहृता
व्यासेन व्यतिशायिता शुकमुखेनाऽऽसेविता सन्ततम् ।
सा दैवान्मधुसूदनाधरपुटाल्लब्धा मया यत्नतः
श्रीमत्कृष्णकथासुधेह विबुधैरास्वादनीया न किम् ? ॥ ५ ॥

---

१, 'शाङ्ग . ( ङ्ग )' इति व पुस्तके । २. 'स्र. ( स )' इति ब पुस्तके ।
३. 'लं क्क ( क )' इति 'ब' पुस्तके । 'महोत्पलेन' इति 'ए' पु० ।
४. 'मद्भवा ( व ) द्भिः' इति 'ब' पु० ।
५. 'धन ( ध )' इति 'ब' पु० 'ध न म' 'ए' पु० ।
६. 'मंद ता ( तां द ) धानो' इति 'ब' पु० ।
७. 'मंदता धारोन्न द्रां' 'ब' 'ए' पु० । 'मा ( ला ) मिमां' 'ब' पु० ।
८. 'ऐ ( औ ) ज्वल्ये' इति 'ब' पु० । ९. 'मुखं' 'ब' पु० ।
१०. 'मां' 'ब' पु० । ११. 'दूधत्त्वे (?) इति 'ब' पु० 'ए' पु० 'हृद्यत्त्वे' इत्येव ।
१२. 'ध्रटिन्य ( त्य )' इति 'ब' पु० । १३. 'क्षेमवत्' इति 'ब' पु० पाठः ।

( सभ्यान् समुद्दिश्य ) भो भोः किं ब्रूत कोऽसावुन्नद्धपुण्यजन्मा निर्वर्णितः प्रबन्धनिर्माता यत्कौशलविलोकनाय भगवतोऽप्येतावान्निर्वन्धः ? । समाकर्णयन्तु—

षट्तन्त्री रसनाञ्चलः कविगुरुर्योऽरुन्धतीगर्भजः
शाण्डिल्यान्वयमण्डनो द्विजमणेर्नारायणस्याङ्गजः ।
शिष्यः कृष्णसरस्वती यतिपतेराशैशवं वैष्णवः
संन्यासी मधुसूदनः सुरगुरोर्द्वैतं स किं न श्रुतः ? ॥ ६ ॥

अपि च—

राधेव सरसा यस्य गुणालङ्कारशालिनी ।
विना कृष्णं न पुष्णाति रतिं वाग्वरवर्णिनी ॥ ७ ॥

अन्यः पुनस्तद्वाचि विशेषः कथं कथ्यताम्, यतः—

इक्षोर्विकारे हरिणेक्षणाया नर्मप्रकारे कविसूक्तिसारे ।
तं तं रसज्ञानुभवैकवेद्यं वक्ता विधातापि कथं नु भेदम् ॥ ८ ॥

( नेपथ्ये )

कृष्णं पुष्णाति यो विश्वं सोऽयं कृष्णसरस्वती ।
जायन्ते यद्गुरुष्वेवं धीराणामुद्धुरा[1] गिरः ॥ ९ ॥

सूत्रधारः[2]—( श्रुतिमभिनीय सानन्दम् ) अये ! परमगुरुष्व[3]प्येवमेव, तथा हि—

न निस्तारप्रस्तावनमपि विना विष्णुभजनं
जनानां सत्यादावधिकलि कुतस्त्यं तदुदियात् ।
इति स्वित्स्वां भक्ति श्रवणमननध्यानविधिना
मुकुन्दः कर्मन्दी प्रकटयति वृन्दावनगतः ॥ १० ॥

( आकाशे कर्णं दत्वा )

हंहो ! किं ब्रूत । अमीषामुपर्युपरि[4]प्रख्यातसंख्यावतां सभासदामनुरञ्जनं कथं भवता विधेयमिति ? श्रूयताम्—

---

१. उद्धरा इति मूलपुस्तकेऽपपाठः ।
२. मूलपुस्तके 'सूत्रधारः' इत्यस्य स्थाने-सर्वत्र 'सूत्रः' इत्येव पाठः ।
३. 'ष्वेवमेव' 'ए' पु० ।
४. 'प्रत्या' 'ए' पु ।

यस्मिन् कर्णपथेऽपि मन्मथकलामुज्झन्ति[1] यूनां कुला-
न्यागोपाङ्गनमाप्रजापतिजना माद्यन्ति यत्संस्मृतौ ।
धूत्कुर्वन्ति सुधां यदाहितहृदो यः सर्वमोदाम्बुधि-
स्तस्याभीरशिरोमणेर्विहरणं कस्यास्ति नो रञ्जनम् ? ॥ ११ ॥

अपि च—

स्फटिकमणीनिव गुञ्जापुञ्जः सञ्जातकृष्णपदरागः[2] ।
स्वच्छान् समुज्ज्वलगुणान् गुणहीनोऽपि क्षमोऽस्मि रञ्जयितुम् ॥१२॥

अपि च—

स्नेह-प्रसाद-शुचितामधुरत्त्व-शैत्य-
संपद्वतीह[3] परिषन्मम संप्रयोगे ।
धारेव देव सरितो भविता रसज्ञा-
संमोदिनी सति कषायरसोपयोगे ॥ १३ ॥

तदिदानीं प्रेयसीं समाहूय नृत्यमिदं निर्वर्तयामि । ( **इति नेपथ्याभिमुखमवलोक्य** ) प्रेयसि ! क्वासि ?

( **प्रविश्य नटी** ) अज्जउत्त ! इ अम्हि । किं दाव आणवेदि भवं । ( आर्यपुत्र ! इयमस्मि । किं तावदाज्ञापयति भवान् ? )

**सूत्रधारः**—( **सखेदम्** ) अयि प्राणप्रतिमे ।

अनञ्जनविलोचनं विगतरत्नहारस्तनं
विबन्धकबरीभरं स्खलितरागबिम्बाधरम् ।
अकङ्कणकराम्बुजं निखिलमण्डनैः खण्डितं
तदेव वपुरीदृशं कृशतनो ! कथं तेऽधुना ? ॥ १४ ॥

**नटी ( सोद्वेगम् )**

चिंताज्जगदमङ्गे कहिं केलि मंडनं तत्थ ।
कोठरजलत्तह्णे विडिबिणि को दोहदामोअ ॥ १५ ॥
( चिन्तादग्धे अङ्गे कथं कथं केलिमण्डनं तत्र ।
कोटरज्वलद्दहने विटपिनि को दोहदामोदः ? ) ॥

---

१. मूले उझंति इत्यशुद्धम् ।
२. मूले 'वैः' इत्यधिकम् । ३. मूले 'परीषद्' इत्यशुद्धम् ।

**सूत्रधारः**—(ससन्देहं[1]) प्रिये ! कुतस्त्या चिन्ता भवत्याः ?

**नटी**—( सास्रम् )

एक्का जेव हि डुहिदा सावि करत्था बहुप्पिआ अस्स ।
सो वि अ रण्णो भाष्णुन्[2] वलं ण आणामि[3] कीदिसं होदु ॥ ? ॥१६॥

( एका एव हि दुहिता सापि करस्था बहु प्रिया यस्य । )
सोऽपि च राज्ञो मन्युः फलं न जानामि कीदृशं भवतु ) ॥

**सूत्रधारः**—( ससान्त्वनम् ) प्रिये ! समाकलय—

तस्य नटाधिपसूनोः सन्तु[4] सहस्रं प्रियाः कलाकुशलाः ।
तन्मध्येऽपि सुता मे भविता राधेव माधवस्यैषा ॥ १७ ॥

नृपतेस्त्वस्य दौर्ज्जन्यं यद्यपि सर्वजनीनम् ।

राष्ट्रेषु भृत्येषु तथैव पित्रोर्मित्रेष्वपि प्रेम न तस्य किञ्चित् ।
येनार्थसिद्धिर्भवति स्वकीया तत्रैव राज्ञः खलु पक्षपातः ॥ १८ ॥

प्रतीपनृपबलतूलशैलप्रवलदावानले नमन्निखिलमेदिनीपालकुन्तलकलापद्युतिकदम्बरोलम्बनिकुरम्बसंलालितपदकमले त्रैलोक्यानवलोकित[5]प्रतिमल्लेऽस्मदुपास्ये सर्वकल्याणशालिनि कुतोऽस्मात् साध्वसस्य संभावनाऽपि ?

यत्कीर्त्या परिपाण्डरीकृत[6]रुचौ ब्रह्माण्डभाण्डोदरे
जम्बालान् विलिहन्ति पायसधिया लम्बालका बालकाः ।
काश्मीरी[7] मुखकान्तिभानिकनकान्यालोक्य लौहान्यपि
व्यामुग्धा रजतभ्रमेण वणिजः क्रन्दन्ति नन्दन्ति च ॥ १९ ॥

**अपि च**—

कमप्यानन्दयत्युच्चैरपि कं संनिहत्यसौ ।
(स्व) स्वपक्षान् रक्षति स्वैरं नन्दनन्दनवत्प्रभुः ॥ २० ॥

( नेपथ्ये ) किं ब्रवीषि रे कुशीलवकुलपांशुलाशुद्धवुद्धे ! मध्येसभं विद्यमानं मामसंबद्धवादेनावधीरयसि ?

---

१. मूले 'संदेहं' इत्यपपाठः ।
२. 'ण्णु छलं' इति 'ए' पु० ।
३. मूले अणामि ।
४. मूले 'शंन्तु' इत्यशुद्धम् ।
५. 'ए' पुस्तके 'प्रतिमल्ले' इत्यत आरभ्य 'ततः प्रविशति । वेशनिर्दिष्टो नलकूबरः' इत्यन्तो भागस्त्रुटितः । सं० ।
६. मूले रुचिरित्यपपाठः ।
७. मू० 'काश्मारी' इत्यशुद्धः पाठः ।

**सूत्रधारः**—( सत्रासम् ) प्रिये ! प्रायः कंसहिताशंसी सदन्त[1]कोऽयम्, तदितो निःसरणमेव शरणम् ( इति निष्क्रान्तौ ) ।

**प्रस्तावना**

ततः प्रविशति सदन्तकः ( परितः समवलोक्य आकाशे लक्ष्यं[2] दत्त्वा ) समाकर्णय रे मूढ ! नरकिन्नरसुरासुरवीरसंसत्प्रशंसास्पदस्य संसारसारभ्रंशकभुजपराक्रमस्य भोजवंशावतंसस्य कंसस्य गोपडिम्भेन हलधरावरजन्मना कथं वा संभावयस्यमङ्गल्यम् । यतः—

कः शम्भुः प्रौढदम्भत्रिपुरदलनकृत् कश्च दम्भोलिपाणि-
जृम्भारिर्जम्भयापि त्रिभुवनजननः कस्तथाम्भोजयोनिः ।
कश्चाम्भोधेः सुतायाः पतिरपि जगदारम्भकृज्जृम्भनाभिः
कंसे कोऽन्यो वराकः प्रभवति किमसावम्बुधिः कुम्भयोनौ ? ॥२१॥

(विहस्य) पश्यन्तु वचनमिदं दुरात्मनः कस्य वा हास्यास्पदं न स्यात् ।

यस्यादेशे वयं भृत्याः केशिचाणूरपूर्वकाः ।
तस्याप्यहितमा[3]चष्टे कनिष्ठात्सीरधारिणः ॥ २२ ॥

( पुरोऽवलोक्य ) कोऽसौ प्रशस्तश[4]स्तगुणः पुरस्तात् ?

किं गन्धर्वः किन्नरः किन्नरः कि किं वा यक्षः किं सुरो वा[5]ऽसुरो वा ।
किं वाप्ये[6]ष श्रीधरः श्रीधरः स्यात् सार्द्धं विद्युत्कान्तया कान्तया यः ॥२३॥

तत् कोऽयम् ? ( इति निपुणं निभालयति) । ततः प्रविशति यथानिर्दिष्टो नलकूबरः ( सानन्दं बृन्दावनमवलोक्य )—

यत् पदपङ्कजरेणू[7] पिञ्जरिताङ्गोऽञ्जसाऽर्जुनीभावात् ।
भ्रात्रा सहास्मि शापान्मुक्तस्तत्केलिकाननं नौमि ॥ २४ ॥

( अन्यतोऽवलोक्य )—

---

१. मूले सर्वत्र 'सदत्तक' इत्यपपाठः । २. मूले 'लक्षं' इति पाठः ।
३. मूले 'आष्टे' इत्यशुद्धम् । ४. मूले 'सस्त' इत्यशुद्धम् ।
५. मूले 'वा' इति नास्ति । ६. मूले 'वा मेष' इत्यपपाठः ।
७. मूले 'रेणु' इति त्वपपाठश्छन्दोभङ्गात् । पादान्तस्थं विकल्पेनेति त्वगतिकगतिः । 'रेणुर्द्वयोः' इत्यमरात्स्त्रीत्वविवक्षायाम् "अप्राणिजातेश्चारज्ज्वादीनामुपसंख्यानम्" इत्यूङा दीर्घान्तत्वस्य सुसाधत्वात् ।

मुकुलितरसालशिखरे गुञ्जन्मधुपावलीच्छलतः।
धनुषि प्रसूनधनुषस्त्रिजगद्विजयाय [1]शिञ्जिनी ध्वनति ॥ २५ ॥

**अपि च—**

धन्येयमरण्यानी—

कुसुमितपल्लवरुचिरा पल्लवरुचिरा मुरारातेः।
तत्र च परागसंपत्परागसंपत्परञ्जनं कुरुते ॥ २६ ॥

( **समन्ताद् वसन्तसंपदं विलोक्य** ) भो भोः सफलस्थावरजन्मानो भगवतः श्रीकृष्णस्य चरणसरोरुहपरागपरि[2]क्षतपरागसस्तरवो लताश्च ! एवमेव सन्ततम्—

अत्युत्तमेषु कुसुमेषु रसाकुलालिर्दुस्था प्रियः पिककलोऽवतु माधवो वः।
कंसोऽप्ययं व्रजतु वंशविवर्द्धनं यो धर्मेण राज्यसुखलब्धिनिवद्धवन्धुः॥२७॥

**सदन्तकः**—आः पाप ! पुरुषापसद ! मादृशि पुरो विराजमाने भोजराजस्याहितं वाञ्छसि ?

**नल[3]कूबरः**—(**सविनयम्**) अये[4]हितमिति को ब्रूते ? हितमेव सवंशस्य कंसस्य धर्मराजपदावस्थानम्; किन्तु दुर्जनानामेवंतदुचितम्।

यतः—

सद्वचांस्यपि हृद्यानि [5]दुर्हृदां कोपवृद्धये।
शीतानि नवनीतानि यथाग्नीनां प्रदीप्तये ॥ २८ ॥

**अपि च—**

शर्मैकशंसिनि सुहृद्यपि दुर्जनानां मर्मान्तकृन्तनकृदुत्तरमेव धर्मः।
स्निग्धं घने ध्वनति यच्छति जीवनं च मण्डूककण्ठकुहरे कथमस्तु सूक्तिः॥२९ ॥

**सदन्तकः**—( **स्वगतम्** ) भो धातः ! कष्टं कष्टं परमेष्ठ्यादिविष्टपाधिष्ठितविशिष्टस्तुतिभिः प्रहृष्टमनसो विष्टरश्रवसो यदभिलषितं नारदो निजगाद, तदेव गरिष्ठमनिष्टं कथयति दुष्टात्मायम्। ( **धैर्यमवलम्ब्य** ) भवतु तावत् प्रायोऽस्य मुखमेव मन्दं नैकान्ततःस्वान्नम्। ( **प्रकाशम्** ) विहस्य भोः ! किमीदृग्वाग्व्यवहरणं भवतः सर्वत्रापि ?।

---

१. मूले दन्त्यादिरशुद्धः। २. 'पराक्षत' इति मूले। 'ए' पुस्तकेऽपि।
३. मूले सर्वत्र 'नलकूबरः' इत्यस्य स्थाने "नलः" इत्येव पाठः।
४. मूले 'ऽ' नास्ति। ५. मूले 'दुहृदा'मित्यशुद्धम्।

**नलकूबरः**—( **स्वगतम्** ) किमयं मामुपहसति ? ( **प्रकाशम्** ) कः सन्देहः, सदभिमताशंसनी वागीदृगेव, व्यवहरणमपि नास्माकं सर्वत्रपाकरम्; किन्तु सकलसज्जनमनोऽनुरञ्जनम् ।

**सदन्तकः**—अये वक्रोक्तिचतुर ! कस्त्वं कस्यासि तद्ब्रूहि ।

**नलकूबरः**—

लीलाविलासनामास्मि साधूनां मोदवर्द्धनः ।
जगदा[1]राध्यपादाब्जवन्दनादकुतोभयः ॥ ३० ॥

त्वयापि नामादिकं भण्यताम् ।

**सदन्तकः**—

सदन्तकोऽस्मि कंसस्य संततं हितचिन्तकः ।
कृतान्तस्यापि संतापसंतानश्चिन्तया मम ॥ ३१ ॥

**नलकूबरः**—( **सहासं** ) अहो जगदुत्तरमुत्तरं भवतः सारल्यञ्च । यदन्तकस्यापि समीचीनत्वं विद्यमानत्वं चोपपाद्यते । तस्यापि दुः[2]खदो भवानिति च ।

**सदन्तकः**–(**सरोषम्**) किं रे जघन्यया बहुव्रीहिसंपत्या विभ्रान्तचित्तोऽसि । तत्पुरुषमेवाश्रय ।

**नलकूबरः**—किं तत्पुरुषेण पुरःस्फूर्तिकेनापि बहुव्रीहिसंपत्तिरेवास्तु सर्वसौख्याय ।

**सदन्तकः**—( **स्वगतम्** ) नानेन दुरात्मना समं वाग्जिगीषाप्युचिता, यतः स्मरन्ति "विवादश्च विवाहश्च समयोरेव शोभते" । ( **प्रकाशम्** ) अये कस्ते समुपास्यः ?

**नलकूबरः**—( **सरोमाञ्चं मुदमभिनीय** ) अस्ति कश्चित् सकलसाधुव्रजपालकस्य वसुन्धरापुरन्दरसदानन्दस्य प्राणसमानस्तनयः सुजनरञ्जननामा ।

**सदन्तकः**—( **सकौतुकम्** ) अहो तस्य राजकुमारस्य नामैव विलक्षणं श्रुत्या प्रतीयते ।

**नलकूबरः**—नामैवेति किं लोकोत्तरं कर्मापि नामानुरूपमेव श्रुत्यादि सर्वप्रमाणैः । स तावन्न केवलं मादृशामेवोपास्यः किन्नाम समस्तानामेव लोकानाम् ।

**सदन्तकः**—किं रे कंसे कल्याणशालिनि मादृशामन्योऽप्युपास्यः ? तस्यापि वा सर्वोपास्यस्य संम्राजः ? । यतः—

---

१. 'जगदाधार' इति 'ए' पु० ।

२. मूले 'दुखदो' इति निर्विसर्गः पाठोऽशुद्धः ।

पौण्ड्रः शाल्वो यवनतनयः षट्पुरो मागधेन्द्रो
बाणः क्षोणीजठरजननः शम्बरो वज्रनाभः।
एतेऽप्युच्चैः प्रणय[1]भयतो यन्त्रिता यत्र कंसे
संसारेऽस्मिन् कथय कुमतेः कोऽस्तु तस्याप्युपास्यः ? ॥ ३२ ॥

**अपि च—**

लीलोद्वेल्लितपाणिपङ्कजतले यस्यासिधाराद्विपद्-
वृन्दोत्तुम्भितकुम्भिकुम्भमिलिता तन्मौक्तिकैरञ्चिता।
संविष्टा गिरिकूटसंकटभुवि स्वाण्डावली मण्डिता
कालव्यालवधूरवोधि विवुधैरायोधनप्राङ्गने[2] ॥ ३३ ॥

**नलकूबरः**—( **विहस्य** ) अये किमि[3]ति रोषपारवश्येन। यतः प्रशस्ताखिललोकोपास्यता तस्योच्यते न पुनः समस्तेषु लोकेषु कंसादयो भवन्तो वा गण्यन्ते।

**सदन्तकः**—अरे किमिति प्राणेभ्योऽपि निर्दयोऽसि ?

**नलकबरः**—( **सस्मितम्** ) अये !

अकाण्डे किल दोर्दण्डप्रोद्दण्डवलचण्डिमा।
[4]पिण्डीशूरस्य तुण्डाग्रे युद्धशौण्डस्य नेदृशः ॥ ३४ ॥

**सदन्तकः**—सम्यगाह। न स्थानेऽस्मिन् समुचितो रोषावेशः; किन्तु कथय तावत् कीदृशस्ते पृथिवीनाथसदानन्दस्य नन्दनः।

**नलकूबरः**—( **सोल्लासम्** ) शृणु।

जाग्रत्युच्चैः कपटशकटाटोपदैत्यप्रशान्ति-
वर्त्यावृत्रासुरविल[5]यनं चार्जुनद्वन्द्वभङ्गः।
( इत्यर्धोक्ते प्रेमविह्वलतां नाटयन् ससंवरणम् )
नाद्यास्फोटः फणिपतिफणे ब्रह्मसंमोहनेन्द्र-
व्रीडाशैलोद्धरणमिति यद् बाल्यविक्रीडितानि ॥ ३५ ॥

---

१. भवतो इति मूलेऽपपाठः। 'ए' पुस्तकेऽपि।
२. 'प्राङ्गणे' 'ए' पु०। ३. 'किमति' 'ए' पु०।
४. 'पिंडां' इति मूले। 'ए' पु० च। ५. 'विनमनं' 'ए' पु०।

**अपि च—**

यस्यारातिवधाध्वरे प्रसृमरक्रोधोऽनलः पूतना-
प्रागाज्याहुतिरुद्धतामररिपुश्रेणीसमित्संभृतिः ।
कंसाद्याः पशवस्तवः क्रतुभुजां मन्त्रः करौ स्रुक्[1] स्रुवौ
दुष्कीर्तिर्द्विषतां तु धूमपटली साधुप्रमोदः फलम् ॥ ३६ ॥

**सदन्तकः**—( **स्वगतम्** ) निःशङ्कमयं दुरात्मा कृष्णसपक्षः प्रबलपापकर्मणः कुबेरस्य कुलाङ्गारः कुमारः । ( **प्रकाशम्** ) ( **साटोपम्** ) रे रे गिरिकूटकन्दराटवीप्रान्ताटाट्यापद्रुतमकुग्रामटिकापर्णकुटीरावासि कद्री[2]शोपासक ! अपरिदृष्ट[3]हिण्डीरपिण्डव्याजव्यञ्जितसुधामण्डलपरिपाण्डरयशोऽम्बराकूपार ! गण्डूषनलान्धकूपनिविष्टमण्डूकडिम्भायमान मूढ ! कुतोऽतिगौरवं तत्र भवति भवतः ।

**नलकूबरः**—( **सस्मितम्** ) अये करालकालक्रोधानलकवलित ! भवतैव दत्तमुत्तरं तत्र भवति गौरवमेवास्माकम् । यत्[4] तेन स्वविरचितं गोप्रचारणं नाम नाटकं वयमध्यापिताः ।

प्रोद्यद्दावानलकवलनं पालनं सत्पथानां
दुर्वृत्तानामपि विलयनं यज्ञयोषा प्रतोषः ।
आभीरीणां व्रजसफलतावीरहारापहारो
वंशीगीताकुलितमतयो यत्र देव्यो विनीव्यः ॥ ३७ ॥

**सदन्तकः**—( **सहासम्** ) अहो गोप्रचारणचतुरस्य कर्म यद्गुरुतापि ।

**नलकूबरः**—अये तत्कर्म गुरुतापि भवतामेव अस्माकं त्वनेकविधतापकलापोपशमनम् । अथ च सकलकलाकल्पवल्लिकल्पद्रुमाणां किमेतदद्भुतं तेषां यदन्यानपि कामकुतूहलदानविनोदनतरणिविहारादीन् स्वोपनिबद्धप्रबन्धान् अद्याप्यध्यापयन्ति ।

**सदन्तकः**—( **सोपहासम्** ) परिज्ञातं भवद्गुरोर्गौरवम् ।

**नलकूबरः** - ( **अनाकर्णितं नाटयति, पुरो मयूरमवलोक्य सानन्दम्** ) अहो ! कथमयं भगवतः पुरस्तात्ताण्डवविनोदपण्डितः ।

आखण्डलकोदण्डस्फुरत्कलापेन मण्डयन्नटनम् ।
नव्यमहाम्बुदमुग्धश्चलच्छिखण्डोऽहिदण्डनोऽभ्येति ॥ ३८ ॥

---

१. मूले 'स्रुक्' इति नास्ति । २. मूले कद्रीशेत्यशुद्धः पाठः ।
३. 'अपरहष्ट' इति मूले । ४. 'यतः' 'ए' पु० ।

( नेपथ्ये ) भोः सम्यगात्थ। वीणावेणुविषाणवेत्रपाणयो भवन्तोऽपि त्वरयन्तु।

**नलकूबरः**—( सोल्लासम् ) अहो वृन्दावनविहरणकुतूहलीकालियमर्दनः सानुचरः समायाति। तदहमप्युपेत्य सहैवागच्छामीति ( निष्क्रान्तः )

**सदन्तकः** -( श्रुतिमभिनीय। सत्रासं परितः समालोक्य सचमत्कारम् ) किमयमिहैव—

द्विपैस्तेषामीशं धनपरिवृढं गुह्यकगणै-
ग्रहैश्चन्द्रद्योतं[1] त्रिपुरमथनं रुद्रनिकरैः।
क्षपेशं नक्षत्रैः सह सुरवरैर्वृत्रदलनं
त्रपापात्रं कुर्वन् व्रजपतिसुतोऽभ्येति सखिभिः ॥ ३९ ॥

( निपुणं निभाल्य )

एतद्रूपं प्रेमसौलभ्यमेतत्प्रागल्भ्यं वाप्येतदेतत्प्रभुत्त्वम्।
एतद्धैर्यं चैतदौदार्यमुच्चैश्चित्रं चित्रं कुत्र दृष्टं श्रुतं वा ॥ ४० ॥

**अपि च**—

शरीरं मरणायैव रोदनायैव लोचने।
तस्य निर्मितवान् धाता येनासौ नेक्षितो हरिः ॥ ४१ ॥

**अपि च**—

मरणं वरमेतस्मात् कंसान्नाशं सितं हितम्।
इतो मृतं यदमृतं मतं तस्मात्सुखं विषम् ॥ ४२ ॥

तदधुना बालकबुद्ध्यैनमवधीर्य स्वकार्यपराङ्मुखं दुर्वृत्तं कंसं सर्वमेतद् वृत्तमावेदयामि। यतः—

स्वामिनं सर्वभावेन ... .... ..... .....।
... ..... ..... ... .... .... ... ..... ..... ॥

( इति निष्क्रान्तः ) ॥ २१॥ ॥४३॥

(ततः प्रविशति यथानिर्दिष्टः श्रीकृष्णः) श्रीकृष्णः[2]—अये ! श्रीदामसुदामवसुदामकिंकिणीदामादयः स्वस्वलोचने सफलयन्तु[3]।

---

१. चन्द्रद्योतः सूर्यः, स हि चन्द्रं स्वदीधितिभिर्द्योतयति। सं०। अत्र 'ए' पु० 'चान्द्रद्योतं' इति पाठः। २. मूले 'श्रीकृष्णः' इति नास्ति।

३. मूले 'फलयन्तु' इत्येव पाठः। 'ए' पुस्तकेऽपि। स्वामिनं सर्वभावेनेति—सेवयेदिति प्रथमपादस्थक्रियापदेनान्वयः। पूर्णश्लोकस्तु—"पृष्ठतः सेवयेदर्कं जठरेण हुताशनम्। स्वामिनं सर्वभावेन परलोकममायया" ॥ इति।

फुल्लच्चम्पककर्णिकारविकसच्चाम्पेयकान्तिच्छटा
वासन्तीनवमल्लिकुन्दकुटजश्रीमत्स्मिनोन्मेषिनी: ।
रक्ताशोकपलासपाटलिजवाप्रोद्भिन्नरागोदया:
स्वच्छन्दं कलयन्तु भो: प्रियसखा: कान्तावनान्तश्रिय: ॥ ४४ ॥

**श्रीदामा**—सखे ! भवत: सकलकलाविलासपरिणाहजलागमनमार्गसीमनि सर्वर्तुनिर्वर्तितसमस्तकुसुमस्तोमाधिवासिते वनोद्देशे किं चित्रं न पश्याम: । परन्तु—

सकला: पल्लवललितानवकस्तवकश्रिया च्चितावल्ल्य: ।
आसामपि माधविका माधवसम्मोदराधिका जयति ॥ ४५ ॥

**कृष्ण:**—( **सरोमाञ्चावहित्थम्**[१] ) सखे ! सम्यग् ब्रवीषि । माधवसंमोदराधिकेत्यमी नवरमणीया वर्णा: कर्णाभ्यर्णमायान्त: कं जनं न रञ्जयन्ति । कथं वाऽमीषु मधुरिमशीतिमसुकुमारिमाण: समुल्लसन्ति । ( **इति ससंवरणं तत्स्तबकावस्थितालिगीतं स्तौति** ) ।

**श्रीदामा**—( **सगूढस्मितम्** ) प्रियसख ! कथं नवीनरमणीहितेयं न स्यात् सुमन:सङ्गिना मधुसूदनेनोद्गीयमाना वर्णावली: ?

**कृष्ण:**—( **समन्दाक्षमन्दाक्षमन्यां दिशमवलोयति** )

**सुजय:**—

मदाकलितकोकिलाकलितपञ्चमोदञ्चितं
विपञ्चितविपञ्चिकोत्तरलचञ्चरीकस्वनम् ।
सुपर्वतरुगर्वभित्कुसुमिद्रुतमालङ्कृतं
विधे: सकलकौशलं किमिदमेव वृन्दावनम् ? ॥ ४६ ॥

**प्रचण्ड:**—अहो ! अतिसौभाग्यमेतेषाम्, यदिह—

अधिकालिन्दि सरोजे मधुपा मधुपातुमुत्सुका: शतश: ।
मधुसूदनमुखमण्डलमिलिता: कुटिलालका यथा भान्ति ॥ ४७ ॥

**सुचण्ड:**—किं बहुना वाक्पल्लवेन । यत:—

प्रियालपनसादरं नवरसालसालं वनं
वलन्मदनविस्फुरत्तनुलताशतालङ्कृतम् ।
यथा मुरविरोधिन: किमपि यौवनक्रीडनं[२]
तथेदमपि काननं तुलितमस्तु किं वस्तुभि: ॥ ४८ ॥

---

१. 'ए' पुस्तके "सचमत्काररोमाञ्चावहित्थम्" इति पाठ: ।

२. एशियाटिक-सोसाइटी-कलकत्तास्थपाण्डुलिपे: एतावतो भागस्य चित्रप्रतिलिपि: श्रीकृष्णकुमारकानोडिया महोदयैरस्मत्सकाशं प्रेषिता, तदाधारेणैतत्पर्यन्तभागे पाठभेदष्टिप्पण्यामङ्कित: । सं० ।

( इति सर्वे परितः परिक्रामन्ति ) ( नेपथ्ये ) ( सानन्दम् )

तनयो गर्गमहर्षेर्विनयप्रणयान्वितो मुरारातेः ।
हास्यरसस्फुरदास्यो भद्रमुखोऽयं न सौख्यकृत् कस्य ॥ ४९ ॥

**कृष्णः**—( श्रुतिमभिनीय सस्नेहं भद्रमुखं पश्यति )

**भद्रमुखः**—( प्रविश्य[1] ) अम्हो पिअवअस्सा एदाणं मज्जे किं पि णमे पडिहादि । एदाइं कवुकलंव कुसुमाइं ज्जेऽव पिअवअस्सं[2] मं च सुहावेत्ति । जदो महिणानं रोमंचित कुचभारो जेहिं कण्हस्सा सुमराविज्जइ मम उन सिदोवलालाज मोअअप्यअदो[3] ( अहो प्रियवयस्याः ! एतेषां मध्ये किमपि न मे प्रतिभाति । एतानि कर्बुरकदम्बकुसुमान्येव प्रियवयस्यं मां च सुखयन्ति । यतो महिलानां रोमाञ्चितकुचभारो यैः कृष्णस्य स्मार्यते मम पुनः सितोपललाज-मोदकप्रकरः । (सर्वे हसन्ति, इति निष्क्रान्तः[4] ) ।

**प्रबलः**—सखे पश्य—

कर्णाटीकुचकुङ्कुमलाटी पाटीरसौरभस्ते नः ।
पम्पाकमलमधूली संपातमदः समेति पवमानः ॥ ५० ॥

**महाबलः**—सखे ! चौरधिया कथमयमवधोर्यते ।

मलयहृदयजातः सोदरश्चन्दनानां
कुसुमविशिखमन्त्री बान्धवो माधवस्य ।
यदिह वहति पद्मा सद्मनां पद्मिनीनां
प्रणयरचनदक्षो दक्षिणो गन्धवाहः ॥ ५१ ॥

**सुबलः**—सखे कृष्ण ! भवद्वनविहरणोपकरणघटनपटीयानसौ वसन्तसमयः ।

प्रतिविटपि प्रतिविटपं प्रतिदलमलघुप्रसूनसंपत्तिः ।
प्रतिविपिनं प्रतिसरणि प्रतिदिशमक्रुशः परागसंभारः ॥ ५२ ॥

**अतिबलः**—प्रियसख कृष्ण ! पश्य पश्य—

कान्ताशानिभृतरसप्रसूनमाला पत्राली मृगमदपत्रका गुरुश्रीः ।
सद्वृत्तस्तनविलसद्वयो विलासा सेव्येयं पररमणीवनान्तलक्ष्मीः ॥५३॥

**कृष्णः**—( सकौतुकं स्वगतम् ) अहो गोपवालकानामपि वाग्वल्लरीय-मीदृशी समुल्लसति । ( प्रकाशं विहस्य ) भो भोः वयस्याः ! वनवर्णनाप्रसङ्गेनापि पररमणीसेवामुपदिशन्तो मामुपहसन्ति भवन्तः ।

१. मूले 'प्रविश्य' इति नास्ति । २. मूले 'पिअवअस्स' इत्यनुस्वाररहितः । ३. मूले 'प्परों' इति पाठः । ४. मूले नास्ति ।

**श्रीदामादयः**—(**सस्मितसंवरणम्**) सखे ! कथमुत्तमपदार्थे परकीयबुद्धया स्वस्मिन्नुपहासारोपः ?

**कृष्णः**—( **सस्मितम्** ) वयस्य ! यद्येवं भोजराजोपभोग्यं छत्रचामरादिकं च मामकं भवेत्।

**सखायः**—सखे ! भवेदेवमपि सकलसाधूनामभिलषितं हि तत्। (**नेपथ्ये**) अम्हो वअस्साओ अअं मादो मम संपदं। ( **अहो वयस्थाः !**[1] **इदं मतं मम साम्प्रतम्** ) ( **संस्कृतमाश्रित्य** )।

वृन्दाटव्यटवीषु पत्रिषु शिखी शैलेषु गोवर्द्धनः
पुष्पेषु प्रियकः सरित्सु यमुना श्रव्येषु वंशीध्वनिः।
गोधुग्वंशजनिर्जनेषु वयसः संपत्सु कैशोरिमा
श्यामं धामसु निर्भरं कथमहो चेतश्चमत्कारभूः ॥ ५४ ॥

( **सर्वे दत्तकर्णाः समाकर्णयन्ति । पुनस्तत्रैव** ) अ इ सच्चं ज्जेव भणसि। अम्हाणं वि एवं ज्जेव अवि अ। ( **अयि सत्यमेव भणसि । अस्माकमप्येवमेव । अपि च** ) ( **संस्कृतेन** )—

नोद्गीते मणिपञ्जरोदरशुकैरङ्गीकृते **झंकृते**[2]
**वन्यैस्तैस्तु** न रत्नदीपनिचये किन्त्वौषधीनां द्युतौ।
नो तल्पेऽपि मृदूत्तरच्छदयुते क्लृप्ते त्वलं पल्लवै-
र्नो माणिक्यगृहे कथंचन मनः कुञ्जे परं रज्यते ॥ ५५ ॥

**कृष्णः**—( **सरोमाञ्चम्** ) हंहो वयस्याः ! केषामियमस्मत्संबन्धिवस्तुमात्रे प्रेमानुबन्धगन्धिनी वाणी। ( **सर्वे विचारयन्ति** ) (**प्रविश्य**) भद्रमुखः ( **साट्टहासम्** ) पिअवअस्स ! कधं सद्दस्स अणमेत्तेण ज्जेवा एदासु पुंभावं आसंजेसि जदो अहिहिअअं। अणोणं विलसिअः जाहिं अलं कि दोः तुमण अणोणस्स, अदोसो भणंति। ताओकवु अणोणं।

( **प्रियवयस्य ! कथं शब्दश्रवणमात्रेणैव एतासु पुंभावमासंजयसि, यतोऽधिहृदयम् अन्योन्यं विलासिनः याभिः कलंकिता यूयमन्योन्यस्य अदोषा इति भणथ, ताश्च खल्वन्योन्यम्** )।

**कृष्णः**—( **सप्रेमाकूतावहित्थं** ) अये प्रायशस्तव वचस इव श्रवसोप्यसंबद्धमेव विषयः। यदरण्यचारिणां कीराणां प्रलापमबलानां कलालापमाकलयसि।

---

१. मूलपुस्तके टिप्पण्यां—'अयं मादो' इति च्छायापाठोऽसंगतार्थः।
२. 'झंकृतैर्वन्यैस्तु' इति मूले पाठः। स तु न सम्यग्। अर्थासंगतेश्छन्दोभङ्गाच्च।

**भद्रमुखः**—( **सभ्रूभङ्गदशनाधरदंशनम्** ) होइ एवंज्जेव होइ । अम्हे ज्जेव कोपस्स पतंति । होड्डुपेकवद् वजह अम्हण वह्मनं सव्वस्सं । ज अणो व अरणं अणादि अंपि धूत्तं दअेव्वेत्तूण तुम्हेहिं भुंजिदं तुह गौडलकषाणं कच्चाअणीपूअणोवअरणं खंडलड्डुपादि अ अम्हे भुजेम्ह । ( **इति सकपटकोपं निष्क्रान्तः** ) ( भवेत् एवमेव भवेत् । भवतु "अस्मास्वेव कोपः संपपति" । पश्य पश्य यथा अस्माकं ब्राह्मणानां सर्वस्वं यजनोपकरणं अन्नादिकमपि धूर्ततयैव तूर्णं युष्माभिर्भुक्तम्, तव गोकुलकन्यानां कात्यायनीपूजनोपकरणं खण्डलड्डुकादि च वयं भुञ्जीमहि ।

( **सर्वे सकुतूहलमन्योऽन्यम्** ) अये वयमप्येनं पन्थानमुत्सृत्य वंजुलनिकुञ्जोदरे मञ्जुलालिगुञ्जितेन चेतोऽनुरञ्जयामः ।

( **इति निष्क्रान्ताः सर्वे** )

## ।। सानन्दनन्दनो नाम प्रथमोऽङ्कः ।।



# ॥ अथ द्वितीयोऽङ्कः ॥

( ततः प्रविशति सखीसमेता राधा चन्द्रावली च )

**राधा**—हला मअण मोइणि ! हला मनो अरंजिणि ! नितांतस्सांतसंतोसप्पदं पदं खु वुंदावणं। जंइह साल-ताल-तमाल-हिताल-वउल-रसाल-पलसासो, एसु सामं मणोरमणूअं आलोचअंतीए मम णाणच्च कहिंपि रज्जइ चेदो।

(सखि मदनमोदिनि ! सखि मनोजरञ्जिनि ! नितान्तस्वान्तसंतोषप्रदं पदं खलु वृन्दावनम्। यदिह साल-ताल-तमाल-वकुल-साल-पलाशाः। एषु श्यामं मनोरमणोयमालोचयन्त्या मम नान्यत्र कुत्रापि रज्यते चेतः।)

**मदनमोदिनी**—सुंदरि ! ण ण क्खु अच्चरिअंएदं जदो साममहवण-रंजिदे चित्तपडपट्गुदीपवि पुरो परिस्फुरन्तम्मि स समुपगाछदि णाअरराओ उण सहस्सफलिअमणिसंकाशे तुज्झ माणसकुसेसए तहवि पवलराआदो विराअमणेसुं किं सुअंचुंचुप्पडिमेसुं किंसुअकुसुमेसुं वि मणोरमसामलिमाणं आकलेसि।

( सुन्दरि ! न न खलु आश्चर्यमिदं यतः श्याममहावर्णरञ्जिते चित्तपटे पुरः परिस्फुरन् अपि स समुपगच्छति नागरराजः पुनः स स्फटिकमणिसंकाशे तव मानसकुशेशये तत्रापि प्रबलरागाद्विरज्यमानेषु किं शुकचञ्चुप्रतिमेषु किंशुककुसुमेषु इव मनोरमश्यामलिमानम् आकलयसि। )

**राधा**—( सगूढस्मितम् ) किं आलि सोणभासातुलदिणिदंविणीबिंवाधरेषु एदेसुं महिदं णीलमणिसमंएदं मद्धुवं ण पेक्खदि भोदी।

( किमालि ! शोणभासातुलितनितम्बिनीबिम्बाधरेषु एतेषु महितं नीलमणिसममेतं मधुपं न पश्यति भवती ? )

**मनोजरञ्जिनी**—( स्मितमभिनीय ) हला मअणमोईणि ! कोवराहो राहीए जं ईमं संतदं अहरमद्धुवं पेक्खदि।

(सखि मदनमोदिनि ! कोऽपराधो राधाया यदियं संततमधरमधुपं पश्यति ? )

**राधा**—( क्षणमात्रं त्रपामभिनीय सस्मितम् ) सहि किं उम्मत्तव्व पल्लवसि। णाहं अहरमद्धुवं पेक्खामि। अविदु उच्चमज्जेव मद्धुवं।

---

१. मूले–'मणो' इत्येवास्ति।    २. मूलपुस्तके नास्ति।

( सखि ! किमुन्मत्तेव प्रलपसि ? नाहमधरमधुपं पश्यामि; अपि तु उत्तममेव मधुपम् )

**चन्द्रावली**—अई रदिकौमुदि ! सहि कामकले ! विआलोलूअजंवु[1]अमल्लू[2]अकाशरवूराहतरच्छुपदलक्षणेहिं मअंधसिंधुरुद्धरुद्धारकंठीरअव्वडासडासडास्फोडेहिं च संकडेहिं उम्भडभअंकरेवि वुंदाडवीप्पदेसे णअणाणं अलंकरेदि सोहग्गं वेदसोवि अअं कसणसारो ।

( अयि रतिकौमुदि ! सखि कामकले ! विडालोलूकजम्बुकभल्लूककासरवराहतरक्षुपदलक्षणैः मदान्धसिन्धुरोद्धुरोद्धारकण्ठीरवबृहत्सटास्फोटैश्च संकटेरुद्भटभयंकरेऽपि वृन्दाटवीप्रदेशे नयनानाम अलंकरोति सौभाग्यम् वेधसोऽप्ययं कृष्णसारः । )

**सख्यौ**—पिअ सहि ! कसणंसारे णअणसोह्यगं सञ्चलोअसाच्छिअं ज्जेव । कधं दे हिअजंपि कलंकिद तेण । ( प्रियसखि ! कृष्णसारे नयनसौभाग्यं सर्वलोकसाक्षिकमेव, कथं ते हृदयमपि कलङ्कितं तेन ) ।

**चन्द्रावली**—अई किमच्छमच्छंतरमुभभावे पि। ( अयि किमच्छम् अच्छतर उभे अपि ) ।

**सख्यौ**—कहिं अच्छंतरं अणच्छंतरंज्जेव आवडिदं । जई सरच्चंदमंडलणिम्मले तुह हिअए सामधामाविम्भावो । जदो—( कुत्र अच्छतरम् ? अनच्छतरमेवापतितम् । यदि शरच्चन्द्रमण्डलनिर्मले तव हृदये श्यामधामाविर्भावः । यतः— ) ( संस्कृतेन )

रज्यति नाशनपाने स्निह्यति न निजे न निद्राति ।
मज्जति चिन्तोदन्वति परमिह कृष्णान्तको लोकः ॥ १ ॥

**अन्याः**—( कीचकक्वणितमाकर्ण्य ) अम्हो वअस्सातु कधमअं सच्छिदो वि भोगांतरेच्छां छिंदई । ( अहो वयस्याः कथमयं सच्छिद्रोऽपि भोगान्तरेच्छां छिनत्ति ) ।

**राधा**—( सचकितानन्दम् ) अम्हो कधमकण्डे कण्हस्स मुरली पछ्वीअदि ईमाण । ( अहो कथमकाण्डे कृष्णस्य मुरली श्रूयते इयम् ) । ( इति परितो विलोकयति ) ( नेपथ्ये वंशीध्वनिः ) सर्वाः ( सचकितं )—

---

१. 'जंवअ' इति मूले । २. 'भल्लअ' इति मूले ।

ण परब्भुदानं कूजिदभेदं मुरली सुहार सक्खणं।
गोप्प अधूलीधोरणिरिअंपि ण परापराअसिरी ॥ २ ॥

ता अदिधिदृव्व पवडदाए इहावत्थाणमणुचिदं।

(न परभृतानां कूजितभेदो मुरली सुधारसक्षणे।
गोष्पदधूलीधोरणिरियमपि न परापरागश्रीः )॥

( तद् अतितिष्ठामः। प्रमदाया इहावस्थानमनुचितम् )। ( **इत्येकान्ते संचरन्ति** )।

( **ततः प्रविशति सखि[1]समेतः श्रीकृष्णः** )

**श्रीकृष्णः**[2]—( **सखिसमाजं निर्वर्ण्य** ) सखे श्रीदामन्! कथमसौ भद्रमुखो विलम्बते। ( **प्रविश्य संभ्रान्तो भद्रमुखः** )

**भद्रमुखः**—भो वअस्स! परित्ताहि परित्ताहि ( भो वयस्य परित्रायस्व परित्रायस्व ) ( **इति त्रासं नाटयति** )।

**श्रीकृष्णः**—( करतलेनाङ्गं परामृश्य ) सखे! कुतस्तवैतादृशी भीतिः?

**भद्रमुखः**[3]—महुघातिआवलोआदो। ( **महोत्पातिकावलोकतः** )।

**श्रीकृष्णः**—सखे किं तत्?

**भद्रमुखः**—( **सरोमाञ्चम्** ) भो वअस्स! कधं कधणिज्जं वा, आज्जेव ण फरई। ( भो वयस्य! कथं कथनीयं वा अद्यैव न फलति )।

अहि पुहवि ससोणं भोअरंभाजुअं तं उअरि पुलिणमेक्वं तप्परं न क्खु किंपि।
उअरि कणअकुंभातप्पुरो हेमचंदो तहवि मधुवराई तेहि सौदामिणीओ ॥३॥

(अधिपृथिवि सशोणाम्भोजरम्भायुगं तद् उपरि पुलिनमेकं तत्परं न खलु किमपि।
उपरिकनककुम्भौ तत्परो हेमचन्द्रस्तत्रापि मधुपराजी तस्याः सौदामिन्याः )॥

**कृष्णः**—( **सानन्दम्** ) सखे! कुत्रावलोकितमेतत्?

**भद्रमुखः**—इधज्जेव वृन्दावणे। ( **अत्रैव वृन्दावने** )।

**कृष्णः**—अये! मयि सन्निहितेऽपि भयं भवतः?

**भद्रमुखः**—संपदं लद्धजीविदोह्मि। ( **साम्प्रतं लब्धजीवितोऽस्मि** )।

**सखायः**—( **परस्परं मुखमवलोक्य** ) सखे कृष्ण! नामानुरूपकर्मायं भद्रमुखः। यदौत्पातिकमपि महत्कौतुकं कथयति।

---

**१. मूले 'सखी' इत्यशुद्धः पाठः। २. मूले नास्ति। ३. मूले 'भद्रः' इत्येव।**

**कृष्णः**—( **विहस्य** ) नूनं सखे ! भद्र एवासि। अन्यथा कथमीदृशीमतिप्रशस्तां गामुवाह भवान्।

**भद्रमुखः**—कहिं गोवहणे मम साच्छं कधं च, पराणज्जेव्वे न्नून तुहणिअअं पत्तोह्मि। ( कुत्र गोवहने मम साक्ष्यं कथं च, पलायमान एव नूनं तव निकटं प्राप्तोऽस्मि )।

**कृष्णः**—( **विहस्य** ) सखे ! मास्तु तव त्रासः। पन्थानमादिश। कुत्राद्भुतं दृष्टम्।

**भद्रमुखः**—इदो इदो ( इत इतः )। ( **तं देशमुपसर्प्पन्नाकर्ण्य सत्रासम्** ) भो भोः सहचराः ! णूणं कंसेण विद्ध्वंसिदाणं दिसादंतावलाणं अअं सिखलाकलकलो। ( भो भोः सहचराः ! नूनं कंसेन विध्वंसितानां दिग्दन्तावलानामयं शृङ्खलाकलकलः )।

**श्रीदामा**—सखे कृष्ण ! सत्तर्कितमेतत् प्रतिभाति। यतस्तस्यैव दुरात्मनो दुश्चरितं निवेदयितुं प्रसूनवर्षिणी त्रिनयननलिनसंभवजम्भदलनपूर्विका गीर्वाणपरम्परापि श्रीमच्चरणान्तिकमायाति, यतस्तव कलेवरे सुललितानि नीलोत्पलानि पतन्ति परितः।

**सुदामा**—( **सकौतुकं लतावितानविधानशून्यं देशमुपगम्य** ) अहो ! अतिभ्रान्तिरियं भवतोः। यदिह कुसुमावचयकुतूहलाकुलितमनसां मृगीदृशामेतानि कङ्कणकिङ्किणीमञ्जीरशिञ्जितानि। इमानि च तासामेव लोचनाञ्चलविलसितानि।

**कृष्णः**—( **सानन्दं तं देशमासाद्य सहासम्** ) सखे सुदामन् ! भद्रमुखेन सममस्माकं समुचितमेव सख्यं यदेतावान् भ्रमः। अपि च इमा रमण्यः।

> विकाशयन्ति[२] हासेन कुमुदं मुदमेव च।
> संतर्प्पयन्ति रूपेण तरुणं चाशरीरिणम्॥ ४॥

( **पुनर्मधुरगीतमाकर्ण्य** )

> एताः कलाकलितताललयप्रवीणाः
> पञ्चाशुगेन रचिताः कुतुकेन वीणाः।
> रोमालिकैतववती यदिहास्ति तन्त्री
> तुम्बीफलद्वयमिदं च कुचच्छलेन॥ ५॥

---

१. मूले 'सिंजितानि' इति दन्त्यादिः पाठः। २. मूले 'विकाशयन्ते' इति पाठः।

**गोप्यः**—( **पत्राणां मर्मरमाकर्ण्य सचकितं परितो विलोक्य सरोमाञ्चकम् अन्योन्यम्** ) पिअ सहि !

सिहि पिंच्छावलिमौलितापिच्छाआर विग्गहच्छाओ ।
सम्पा सोअरवसणो ससिकरहसिदच्छवी कोयं ॥ ६ ॥

( प्रियसखि !
शिखिपिच्छावलिमौलिस्तापिच्छाकारविग्रहच्छायः ।
शम्पा सोदरवसनः शशिकरहसितच्छविः कोयम् ? ॥ ६ ॥ )

( **विमृश्य** ), अपि नूनं फलिदमविलम्बिदंज्जेव कच्चाअणीपूअणसंचिद-पुष्पपुंजेण । जदोअअं णपसाहणंसिद्धंजनदंभअमाणो सिरीणंदणंदणो साणंदं अंतिकमाआदि । ( अपि नूनं फलितमविलम्बितमेव कात्यायनीपूजनसंचित-पुष्पपुञ्जेन । यतोऽयं अप्रसाधनसिद्धाञ्जनदम्भायमानः श्रीनन्दनन्दनः सानन्द-मन्तिकमायाति )। ( **इत्यतितरां त्रपामभिनीय लताव्रातान्तरितं स्थानमागत्य अन्तरा-अन्तरा पश्यन्त्यः स्वच्छन्दं विहरन्ति** ) ।

**कृष्णः**—( **शनैस्तं देशमुपव्रज्य** ) भोः सखायः पश्यन्तु—

अकाण्डे वक्षोजस्खलितवसनव्यापृतकरं
मृषाजृम्भारम्भोन्नमितभुजबन्धोन्नतकुचम् ।
वृथा यातायातं कपटवलितान्योन्यहसितं
वशीकर्तुं विश्वं व्यवसितमिदं किं मृगदृशाम् ॥७॥

**श्रीदामा**—सखे किमत्रापि विप्रतिपत्तिः ? यदेतत्संपदैव मदनस्त्रिजग-द्विजयाय सज्जते । यतः—

पञ्च संख्यां न[१] लङ्घन्ते यस्य पुष्पमयाः शराः ।
अनङ्गोऽपि[२] स जेता यत्त्रैलोक्यं प्रमदामदात् ॥ ८ ॥

**कृष्णः**—सखे ! केयं दूरोन्नमितकरकिसलया सरलीकृततनुवल्लिर्मल्लिका-स्तवकव्याजाद्विराजमानं[३] माननस्पर्द्धयाऽम्बरतले विलम्बमानमिन्दुबिम्बमसूया-परवशेवाकर्षति ?

**सुदामा**—सखे ! कथमनङ्गसेनामेनां न जानासि ?

**कृष्णः**—सखे ! गुणाविसंवाद्येवाभिधानमेतस्याः । तथाहि—

यत्पत्युपचितलक्ष्मीरथगजलीलातुरङ्गसंपत्तिः ।
तस्मादनङ्गसेना सकलाङ्गश्रीरनङ्गसेनैव ॥ ९ ॥

---

**१. मूले 'न घंते' इति त्रुटितः पाठः । २. मूले 'ऽपि' नास्ति । ३. 'माण' इति मूले ।**

( स्थानान्तरं गत्वा ) सखे वसुदामन् ! केयं लज्जानम्रमुखीशतमुखीकरोत्युरोजपरिसरामुक्तमुक्ताहारशोभां शोणाधरोदञ्चितमधुमधुरस्मितेन ।

**वसुदामा**—सखे ! मनोजवाहिनीयम् ।

**कृष्णः**—प्रियसखे ! सत्यमेवमेवम् । तथाहि—

विपुलं पुलिनं जघनच्छलतः कुचकुम्भमिषादपि कोकयुगम् ।
मुखलोचनपाणिपदोपधितः कमलानि दधाति मनोजसरित् ॥ १० ॥

**किंकिणीदामा**—सखे ! कमलमालामेनां किं नाकलयसि ? येयं गण्डस्थलमिलितमणिकुण्डलताण्डवितेन प्रोद्यच्चन्द्रमण्डलचन्द्रिकानिचयाचमनोन्मत्तचकोरतरुणतरलिमभ्रमभूमी भवति ।

**कृष्णः**—समालोचिता कमलमालैवेयम्, यतः—

चरणौ कमले कमले च करौ युगलं कुचयोरपि तन्मुकुले ।
वदनं कमलं नयने कमले सुतनोः कमलान्यखिलैव तनुः ॥ ११ ॥

( अन्यतोऽवलोक्य ) सखे ! केयमनुद्भिन्नयौवनापि निर्द्धनधनायमाना मकरकेतनस्य ?

**श्रीदामा**—सखे ! चम्पककलिकेयम् ।

**कृष्णः**—सत्यम्, अत एव नान्तर्गतं मोदमाविष्करोति । अपि च—

साकूतं न वचो दृशौ न तरले वक्षस्थलं नोन्नतं
न स्मेरं वदनाम्बुजं न च शिरश्चेलाञ्चलेनाञ्चितम् ।
किन्त्वङ्गानि कुरङ्गशावकदृशस्तान्यद्य नेत्राध्वना
चित्तप्राङ्गणसंगतानि दधते यूनामनङ्गोत्सवम् ॥ १२ ॥

**सुदामा**—सखे ! कामाङ्कुरेयमपि तादृशी ।

**कृष्णः**—( निपुणं निभाल्य ) सत्यमस्यां कामबीजमङ्कुरितमिदानीम् ।

तथाहि—

शैशवं तरुणिमा च भूभुजौ
चापलं मधुरिमा च मन्त्रिणौ ।
सुभ्रुवो वपुषि पश्य संगरे
सङ्गिनौ न जयिनौ न भङ्गिनौ ॥ १३ ॥

**अपि च—**

कृषीबलाभ्यामिव मध्यसीमा
सन्ध्येव सूर्येन्दुकराञ्चलाभ्याम् ।
मृगेक्षणा शैशवयौवनाभ्यां
संरक्ष्यते[1] स्वाम्यधिया न सम्यक् ॥ १४ ॥

पुनरन्यामालोक्य—

दृक्चापलेनाविशदाम्बुजानि
कान्त्या मुखेन्दोः कनकाम्बुजानि ।
सूते स्मितेनापि सिताम्बुजानि
केयं वयस्याः[2] कुसुमेषु लक्ष्मीः ॥ १५ ॥

**श्रीदामा**—प्रियसखे ! अम्बुजलीलाऽसौ ।

**कृष्णः**—सत्यमेव, अस्या लीलयैवाम्बुजानि जायन्ते ।

(**पुनरन्यामवलोक्य**) इयं परिचितैव, सुप्रजस्यास्मत्प्रतिवेशिनस्तनूजा-श्रृङ्गारसरसी । अपि च—

श्रृङ्गारसारसरसी[4]यमनङ्गभङ्गिर्यस्याः समुल्लसति यत्कनकाञ्जवल्लिः ।
तत्कोरकद्वयमुरोजमिषादुदेति रोमावलीच्छलमुरीकुरुते च नालम् ॥ १६ ॥

(**अपरां विलोक्य**) इयं कुंकुमपङ्कपिञ्जरितकुचकोरकद्वयरुचा मनोज-भूभुजः साम्राज्याभिषेकाय सिन्दूररञ्जितमङ्गलकलशशालिनीव संलक्ष्ययाणा[5] प्राक्परिज्ञातैव सदपत्यस्य व्रजराजामात्यस्य तनया रसतरङ्गिणी । अपि च—

इयमनङ्गमतङ्गजसङ्गिनी सुरतरङ्गतरङ्गतरङ्गिणी ।
वहति कुम्भयुगं स्तनकैतवात्तनुरुहालिमिषेण लसत्करम् ॥ १७ ॥

(**अन्यामवलोक्य**) इयमपि पूर्वप्रत्याकलिता गोपग्राममान्यस्य धन्य-तनयस्य कन्यका मदनदीपिका । या करकिसलयद्वयाकलितकमलयुगलेन कमला-लयां द्विगुणितपाणिद्वितयामिवोपहसति । (**अपरामवलोक्य**) सखे ! केयं कुरङ्ग-नयना तरङ्गितापाङ्गीभृङ्गीश्रेणिनर्तनकृतव्यावर्तनयोरपि श्रवणनिहितनलिनयो-र्नयनभ्रमं न वारयति ?

---

१. मूले 'संरक्षते' इत्यशुद्धः पाठः । २. मूले 'वयस्या' इति निर्विसर्गः पाठोऽसंगतः ।
३. समासान्तविधेरनित्यत्वान्नित्यमसिच् प्रजामेधयोरित्यसिज् न ।
४. मूले 'ससी' इति मध्ये रकाररहितः । ५. 'लक्षमाणा' इति मूलेऽपपाठः ।

**सुदामा**—सखे ! किमेतासामसंख्यातानां गणनपथातीतगुणानां प्रत्येकं नामकथनव्यसनेनास्मत्पुरुषायुषपर्यवसानेन । इयं सुरतरुवल्लरी, इयं कुङ्कुम-मञ्जरी, एषा रसालवल्लरी, किं बहुना ।

**कृष्णः**—( **सप्रणयरोषम्** ) अये ! किं भूरुहभूधरादिसाधारणायुर्भोगेन ? यद्युपचितभाग्येन सर्वेन्द्रियभोग्ययोग्यतापन्नत्वेऽप्येताः सविशेषं नाकलयामः ।

**सुदामा**—( **साकुञ्चनमन्यां दिशमवलोक्य सोल्लासम्** ) अये श्रीदामन् वयस्य ! पश्य पश्य—

नेपथ्यं रचयन्त्याः करकृतमुकुरे कुरङ्गनयनायाः ।
पुरतः स्फुरति मधुद्विषि दृशि दृशि काचिच्चमत्कृतिर्जयति ।। १८ ।।

**कृष्णः**—( **सोल्लासं** ) भो भोः सहचराः ! चलत स्थानान्तरं गत्वा अन्यासामाचरितमालोचयामः । ( **इति निष्क्रान्ताः** ) ।

( **ततः प्रविशति चन्द्रावली राधा च** )

**चन्द्रावली**—( **नेपथ्याभिमुखमवलोक्य** ) ( सोल्लासं संस्कृतेन ) सख्यः !

कोऽपि तमालशाखिनिशरद्राकानिशानायक-
स्तस्योर्ध्वं निविडं तमः स्मृतिभुवो दिव्यं धनुर्मध्यगम् ।
तस्याधः स्फुरदम्बुजद्वयमलिश्रेणीविनोदास्पदं
बिम्बस्था तदधः स्फुटं विधुनुते धैर्यं सुधाधोरणी ।। १९ ।।

**रतिकौमुदी**—पिअ सहि ! कथमलीअंज्जेवाखिलं कथेसि । जंअअं णंद-उलतिलओ मुरलीं वादेदि । ( प्रियसखि ! कथमलीकमेवाखिलं कथयसि । यदयं नन्दकुलतिलको मुरलीं वादयति ।

**राधा**—( **सहचरीकरकमलमालम्ब्य** ) अई कधेहि कधं अअंमादो मम वामलोअनंचलफंदणअमंदं उदेदि । ( अयि कथय कथमकस्मान्मम वामलोचना-ञ्चलस्पन्दनममन्दमुदेति । )

**मदनमोदिनी**—( **सहासम्** ), अम्हो भद्दं भद्दं पिअसंपओअं सूचेदि । ( अहो भद्रं भद्रं, प्रियसंप्रयोगं सूचयति ) ।

**राधा**—( **स्वगतम्** ) जई एवंविधं भाअधेअं भवे । ( **प्रकाशम्** ) सहि ! तुह वअणं दाणीज्जेव पमाणीभूदं । जं कुसुमकाणणे अदिप्पियदमकसणागरु-गन्धवाहो सुहावेदि अंगाई । ( यद्येवंविधं भागधेयं भवेत् )। ( **प्रकाशम्** ) ( सखि तव वचनमिदानीमेव प्रमाणीभूतम् । यत् कुसुमकानने अतिप्रियतमकृष्णाऽ-गुरुगन्धवाहः सुखयत्यङ्गानि ) ।

**मनोजरञ्जिनी**—( सहासम् ) सहि राहे ! ण खु एत्तिअंजेव एदस्स फलं किंणाम तेणज्जेव पिएण पवल तनु[1] सुमाएण विअलिदवसणा सअलकलेवर-फंससुहंपि उवलहिअसि । ( सखि राधे ! न खल्वेतावदेव एतस्य फलं किं नाम तेनैव प्रियेण प्रबलतनुसुमायेन विगलितवसना सकलकलेवरस्पर्शसुखमप्युपलप्स्यसे ) ।

**राधा**—( सरोमाञ्चावहित्थम् ) पिअ सहि ! तुमं खु णूनं णं जोदिद्दंसण । पवीणासि । जदो तुह वअणरआणंतरंजेव वुंदावणतरुलदा वुंदपल्लवां-दोलणसाली कलिंदणंदिणी पुरादरविंद[2]गंधानुवंधी गंधवाहो महकलेवरं सिसिरीकुणई । ( प्रिय सखि ! त्वं खलु नूनं ननु ज्यौतिषदर्शनप्रवीणासि । यतस्ते वचनखानन्तरमेव वृन्दावनतरुलतावृन्दपल्लवान्दोलनशाली कलिन्दनन्दिनी पूरादरविन्दगन्धानुबन्धी गन्धवाहो मम कलेवरं शिशिरीकरोति ) ।

**मनोजरञ्जिनी**—( विहस्य ) सच्चं भणासि भाविणि भाविणि भावुए तुह जोदिद्दंसणंजेव पमाणीकरोमि । ( सत्यं भणसि भाविनि भाविनि भावुके तव ज्यौतिषदर्शनमेव प्रमाणीकरोमि ) ।

**राधा**—( नेपथ्याभिमुखमवलोक्य साश्चर्यम् ) अम्हो इध आअच्छध । ( अहो इत आगच्छत ) ।

( संस्कृतेन )—

सीमामन्मथनर्मणां तरलिमा त्रैलोक्यवामभ्रुवां
भूमाप्रेमरसार्णवस्य गरिमामाधुर्यसौन्दर्य्ययोः ।
स्थेमाविक्रममन्दरस्य महिमालावण्यसारश्रियः
सख्यः पश्यत कोऽयमम्बुदमहस्तोमः समुज्जृम्भते ॥२०॥

**मदनमोदिनी**—( सानन्दम् ) अहो चित्तं चित्तं वामलोअणंचलफदणफलं-अचिरेणजेव दे लोअनगोअरीभूदं । जंतुह गुणेहिं किदाअहणोअं इधज्जेव आअच्छदि ।

णंदणअणदुद्धंबुहि विहूवहूडीसरोइणी सविदा ।
राहा मम्महलीलासाला सुरदाहिदेवोअं ॥२१॥

( अहो चित्रं चित्रं ! वामलोचनाञ्चलस्पन्दनफलमचिरेणैव ते लोचन-गोचरीभूतम्, यत्तव गुणैः कृताकर्षणोऽयमत्रैवागच्छति ।

---

१. मूले अस्फुटम् । २. 'दविदं' इति मूले ।

( नन्दनयनदुग्धांवुधि विधुर्वधूटीसरोजिनी सविता ।
राधा मन्मथलीलाशालासुरताऽधिदेवोऽयम् ) ॥

**राधा**—( **क्षणमन्तःप्रमोदं तूष्णीमनुभूय सखेदम्** ) सहि किं एदिणा सुअसारिआतुल्ला पच्चाअलिदप्पलविदेण सवणमेत्तापादरमणिज्येण । ( **स्वगतम्** ) किमेव्वं संभाविणिज्जंपि । महच्चासा तित्तालाबूलदासु कधं रसालफलसंपत्ती होदु । अवि अ । ( सखि किमेतेन शुकशारिकातुल्या प्रत्याकलितप्रलपितेन मात्रापातरमणीयेन । ( **स्वगतम्** ) किमेवं संभावनीयमपि ? महत्याशा । तिक्तालावूलतासु कथं रसालफलसंपत्तिर्भवतु । अपि च ) ( **संस्कृतेन** )—

अहं भवेयं व्रजराजनन्दनप्रियाङ्कगेतिप्रतिभाति नो हृदि ।
पलालजालाऽनलधूमधोरणी भवेत्कथं वा विधुबिम्बचुम्बिनी ॥ २२ ॥

**मदनमोदिनी**—( **चिन्ताकुलितां तामवलोक्य** ) सहि राधे णाहं अपच्चाअलिदं भणामि किंदु अणधापमाणप्पदिदंज्जेव, जदो ( सखि राधे ! नाहमप्रत्याकलितं भणामि; किन्तु अन्यथाप्रमाणापतितमेव, यतः ) । ( **संस्कृतेन** )—

पुष्णाति राधाऽपि न माधवं चेदञ्चेत्तदङ्कं वत का त्रिलोक्याम् ।
कल्पद्रुमं कल्पलतापि नो चेत्किं पूतिकावल्लिरलङ्करोति ॥२३॥

**राधा**—( **सप्रणयकोपम्** ) अयि विरमीयदु अणुवच्चणधम्मस्सउववादकत्तणकंपणमिथ्यावाग्जालेन । ( **विमृश्य** ) किमत्थ कुप्पामि । दुव्वोधं खु विहिंनो चरित्तं यदो । ( अयि विरम्यतामनुवर्तनधर्मस्योपपादकत्वानुकम्पनमिथ्यावाग्जालेन । ( **विमृश्य** ) किमत्र कुप्यामि ? दुर्बोधं खलु विधेश्चरित्रं, यतः )—

लोकोत्तरेणापि गुणैकशून्या प्रयाति योगं दयितेन दैवात् ।
कलाधिनाथेन करग्रहेण न रञ्जिता किंशुकशिंबिकापि ? ॥२४॥

**सर्वाः**—( **सकुतूहलमन्योन्यम्** ) हला सहिओ अअच्छध निअडं गदुअ पअडदापे पेखम्म चरिदमेदाणमिति । ( हला सख्यः ! आगच्छत निकटं गत्वा प्रकटतया पश्यामश्चरितमेतेषाम् ) ।

( **इति निष्क्रान्ताः** )

( **ततः प्रविशति सखिभिः सह श्रीकृष्णः** )

**श्रीदामा**—( **सकौतुकम्** ) सखे कृष्ण ! पश्यसि कथमसौ कङ्कोलवल्लि[1]कुसुमावली विलसति । यत्प्रतिज्योतिर्महारञ्जनरञ्जितपटीकरोत्यटवीतलभूमिम् ।

---

१. मूले—'कंकेलि वल्ल' इत्येवं लेखः ।

**कृष्णः**—सखे ! सत्यमेवमेव सुषमातलभूमेः, किन्त्वलक्तकरसावसिक्त-पदलक्षणलौहित्येन नितम्बिनीनाम् । अत एव निन्दितदलितपद्मरागाः स्थले स्थले तत्ताम्बूलकल्करागाः । ( **नेपथ्याभिमुखमवलोक्य** ), भोः प्रियवयस्याः ? महदद्भुतं यदत्यन्तसन्निहितत्वेऽप्येतावन्तं कालमेताः सविशेषं नैवाकलिताः ।

**सुदामा**—सखे किमद्भुतम् ? अन्यासक्तचित्ताः कण्ठगतां हारलतामपि न पश्यन्ति ।

**कृष्णः**—( **सप्रमोदं स्वगतम्** ) प्रायो भाविशुभसूचकमिदमुदाहरणम् । ( **प्रकाशं सस्मितम्** ) सखे ! केयं सकलगुणालङ्कृता मूलप्रकृतिरिव प्रधानपदाभि-धेया पुरतो राजते ? अपि च—

व्यामोहयति भुजङ्गाननङ्गीकुरुते महत्तमं ज्योतिः ।
अतनुविषज्वरहरणी रमणी किमियं महामणिश्रेणी ॥ २५ ॥

**वसुदामा**—सखे ! चन्द्रावलीयम् ।

**कृष्णः**—( **ससन्देहम्** ) अये ! किमस्मत्तातामात्यचातुरीचतुराननस्य चन्द्रसेनस्य कन्यका ?

**वसुदामा**—अथ किम् ?

**कृष्णः**—सखे ! नूनं चन्द्रावल्येवासौ । यदेतद्वदनचन्द्रिकाचन्द्रमप्यबली-करोति । यदनेन—

सुवदनावदनेन भवेत्समः कथमसौ सकलोऽपि कलानिधिः ।
क्व नु सुवर्णविवर्णकराकृतिः क्व रजतप्रतिमाकृतितस्करः ॥ २६ ॥

( **अन्यामवलोक्य** ) सखे किङ्किणीदामन् ! या प्रतिपदोदितकलातिशयित-ज्योतिर्मण्डलशालिनीविमलमहसामखिलगोकुलविलासिनीनां बहुलतारकाणां राकेव ज्योत्स्नाजालतिरस्करिणी पुरः स्फुरति । अपि च—

साश्चर्यं समुदीक्ष्य सस्मितमतित्रासाकुलेवाञ्जसा
चेलान्तेन[2] पिधाय[3] चारुवदनं तिर्यक् पुनः प्रेक्षते ।
मा मालक्ष्यत[4]दीक्षणार्पितदृशं संवीक्षतेऽन्यां दिशं
केयं नेत्रतरङ्गितेन कुरुते कन्दर्पदर्पोन्नतिम् ॥ २७ ॥

**किङ्किणीदामा**—सखे ! महदद्भुतं यदद्यावधि राधिकापि तेन बोध-गोचरीभूता ।

---

१. 'चन्द्रिमपि' इति मूले । २. 'वेलान्तेन' इति मूले ।
३. विधाय । ४. 'आलक्ष' इत्यसंगतः पाठः ।

**कृष्णः**—( **किञ्चिदज्ञानमिवाभिनीय** ) अये ! किं पितृचरणानां राजमन्त्रणाराजिराजीविनीभानोर्वृषभानोस्तनया ?

**किङ्किणीदामा**—प्रियसखे ! किमन्यापि राधिका त्रिभुवने यतस्तव संशयः संगच्छते ?

**कृष्णः**—( **सप्रमोदम्** ) सखे सत्यमेवेयं राधिका जगति कुसुमायुधमोदस्य । अपि च—

करादिङ्घ्रमुखलोचनं नयनरञ्जनं नीरजै-
वपुः प्रकृतिसुन्दरं कनकचम्पकैः कल्पितम् ।
स्तनद्वयमनुत्तमं स्तवकसंपदा स्वस्तरो-
र्धनं कुसुमधन्वनस्तदिह राधिकैवाधिकम् ॥ २८ ॥

( **जनान्तिकम्** ) प्रियवयस्यौ श्रीदाम-सुदामानौ ! भवन्तौ किं कथञ्चिदेतस्यामपि प्रेमाणं प्रतीतः ?

**श्रीदामा**—सखे ! सर्वथा प्रेक्षापूर्वकारिणः सरोजजन्मनस्तन्निर्माणप्रयासवैफल्यमन्यथापद्येत । यतः—

अस्याः समस्तरमणीरमणीयरूप
लावण्यकौशलविलासकलान्तमूर्तेः ।
नैवं भवान्[1] भवति चेद्दयितस्त्वदन्यः
को वा गुणैकनिलयोऽस्तु तदा त्रिलोक्याम् ॥ २९ ॥

**कृष्णः**—सखे ! संभावनामात्रमेतन्न प्रमाणम् । यतः—

अस्याः सरोरुहदृशो यदि नैव लोके भोगाय योग्यदयितः क्व तदाहमस्मि ।
अप्राप्य चन्द्रकिरणं तृषितारनालजाले न तुष्यति कदाचन किं चकोरी ॥३०॥

**सुदामा**—सखे ! यद्यप्यतिप्रशस्तवस्तुप्राप्तावयोग्यताज्ञानं भवत्येव, तथाप्येषा शङ्कापिशाची तिरस्करणीया । यतः—

तवैव रूपेण सदैव कृष्ण पुष्णाति राधाहृदयं सदृक्षा ।
यन्नाभिरन्ध्राद्बहिराविरास्ते तस्यैव रोमालिमिषेण किञ्चित् ॥ ३१ ॥

**अपि च**—

भ्रुवोर्न शोभा शिरसश्च कृष्ण रुचिं विना नापि दृशोर्विलासः ।
इदं वधूनां न विदन्ति धीराः प्रत्यक्षतः किं श्रुतितः प्रतीतम् ॥ ३२ ॥

---

१. मूले 'भावान्' इति न संगतः पाठः ।

**कृष्णः**—सखे ! तत्रापि किमिदं प्रतिभामात्रं भवतोः, अथवा तदिङ्गितमपि परिज्ञातं किञ्चित् ।

**श्रीदामा**—सखे ! किमधिकेङ्गितपरिज्ञानेन ? अत्र कुरङ्गाक्ष्याश्चक्षुर्व्यापार एव साक्षीकर्तुमुचितः । यतः—

कुटिलैवाङ्कुशवल्लिर्मदकलकरिणं वशीकुरुते ।
इति किल कुटिलां दृष्टिं भवति सरोजेक्षणा[1] क्षिपति ।। ३३ ।।

( **ततः प्रविशति सखीभिः सह राधा** )

**मदनमोदिनी**—( **समाकर्ण्य कर्णमूलमुपसृत्य** ) सहिए ! दिट्ठिआ वड्ढसि । जं तुमं कण्हो सानुराओ पेच्छिदि[2] । ( सखि ! दिष्टया वर्द्धसे । यत् त्वां कृष्णः सानुरागः प्रेक्षते ) ।

**राधा**—( **सानन्दं विलोक्य संस्कृतेन** )—

अनङ्गस्फीताङ्गाः कति न तरुणाः सन्ति जगति
प्रवीणा वा तन्त्रे कति न रतिनाथस्य कृतिनः ।
तथापि प्राचीनैरविगणितपुण्यैर्मृगदृशा-
मयं याशोदेयः प्रियसखि ! दृशोरिति सविधम् ।। ३४ ।।

**कृष्णः**—( **सानन्दं पुनरवलोक्य सपुलकम्** ) सखे ! कथय कथय—

ममास्यं प्रत्याकस्मिकमुपगते नेत्रकमले
वयस्यामाभाष्य स्मितविकसिताम्भोजवदनम् ।
कराङ्गुल्या रत्नाङ्कुरपरिसरत्कान्तिभरया
विबुद्ध्यैतां ब्रूते मधुरमधुरं किं प्रियतमा ।। ३५ ।।

**सुदामा**—प्रिय सखे ! निरूपयामीति ( **समाकर्ण्य** ) सखे ! ज्ञातम्, ज्ञातम् । ( **अनङ्गेत्यादि पठति** )

**सुदामा**—भो भोः सखायः ! महत्कौतुकं पश्यन्तु—

अधिमाधवमधिराधं प्रेमविचारे परस्परं मनसा ।
शङ्का पङ्कोद्धरणे जयति धुरीणं निरीक्षणं किमपि ।। ३६ ।।

**कृष्णः**—( **वयस्यान् स्मितमुखान्निरीक्ष्य** ) सखे ! किसलयमिलितकल्यमयूखमालिमयूखसुषमाधरीकरणाधरकिरणमुद्गिरन्ती पुनः किं वदति प्रियसखी विधुमुखी ।

**श्रीदामा**—सखे ! निश्चित्य वदामि ।

---

१. 'सरोजेक्षण' इति मूले पाठः । २. 'पेच्छदि' इति मूले ।

**राधा**—( **साश्चर्यम्** )—

कीदृशमंग मंगसूअणवअणसरोए पिअंवदे भणसु ।
पिवदि विलोअणभिंगो मज्जदि जमजंगमातंगो ॥ ३७ ॥

( कीदृशं मधु मधुसूदनवदनसरोजे प्रियंवदे भण ।
पिबति विलोचनभृङ्गो मज्जति यदनङ्गमातङ्गः ॥ ३७ ॥ )

**मनोरञ्जिनी**—(**विहस्य**) पिय सहि ! किं तव रसणम्हिंजंवि पाणादव्वं मएएदं । ( प्रियसखि ! किं तव रसनामृतमपि पातव्यं मयेदम् ? )

**राधा**—(**क्षणमतितरां लज्जामभिनीय सप्रणयम्**) प्रिय सहि परिहर परिहासं कधेहि दाव इति । ( प्रियसखि ! परिहर परिहासं कथय तावत् ) । (**संस्कृतेन**)—

स्यूते सदैव मनसी वपुषी रहस्यक्रीडासु वीक्षणविलासविधौ च नेत्रे ।
यूनोर्मिथो यदुदये सखि सोऽनुरागः संपद्यतामयि कथं मयि माधवस्य ॥३८॥

**मनोरञ्जिनी**—( **सस्मितम्** ) प्रियसहि ! संपन्ने[१]पि वच्छुनि संपादणेच्छा ण कूवुदेवि छिन्दई । (प्रियसखि ! संपन्नेऽपि वस्तुनि संपादनेच्छा न सन्देहं छिनत्ति ) ।

**कृष्णः**—( **सानन्दम्** विचार्यतां तावत्—

चेत्पद्योपरिखञ्जरीटयुगलं तेनैव नेत्रोपमा
धम्मिल्लोऽपि च तेन याति तुलनां चेद्ध्वान्तं तमः ।
इन्दुश्चेदकलङ्कितः परिणतस्तेनैव तुल्यं मुखं
केनेदं तुलितं वदामि सुतनोः साकूतमालोकितम् ॥ ३९ ॥

**वसुदामा**—सखे कृष्ण ! किमिदम् ?

राधा त्वद्वदने निधाय नयने मूर्द्धानमाधुन्वती
व्यालोलश्रुतिकुण्डलांशुपटलव्यामिश्रगण्डद्युतिः ।
सिक्तेवोच्छलितेव संगतमहागर्वेव पूर्णेव च
श्रान्तेव भ्रमितेव संभृतभयेवार्तेव संलक्ष्यते ॥ ४० ॥

**कृष्णः**—( **निरूप्य स्वगतम्** ) किं कामः पापीयान् मामिव मत्प्रियतमामपि पीडयति ? ( **प्रकाशम्, जलदपटलाडम्बरमम्बरमवलोक्य सोद्वेगम्** ) सखे सुदामन् ! किमिदम् ?

मध्येऽम्बरं स्फुरति पीनपयोधरश्रीर्मुक्ताफलोज्वलरसाकुलमुग्धमूर्तिः ।
सौदामिनीद्युतिरियं च विभाति कान्ता संतापसन्ततिरियं न कथं प्रशान्ता ॥४१॥

---

१. 'सम्पन्नंपि' इति मूले पाठः ।

**सुदामा**—( **सगूढस्मितम्** ) सखे ! किमाश्चर्यम् ? उचितमेवोन्नतपयोधरागमसमये प्राचुर्यमन्तरूष्मणां¹ यतः स्वेदवारां धाराविर्भवति, तत्सर्वतो मुखाङ्गसङ्गेनैव सन्तापशान्ति सम्पादय ।

**कृष्णः**—( **परितः सखीनवलोक्य दक्षिणपवनस्पर्शमनुभूय**) सखे ! क्व तत्प्राप्त्याशा ? कृष्णवर्त्मसखाः सर्वतः संलक्ष्यन्ते ।

**सुदामा**—सखे ! विचार्यमेतदिति ।

**भद्रः**—( **कठिनीमादाय प्रहबलं निरूप्य सस्मितं संस्कृतेन** ) सखे ! नैतैः प्रत्यूहशङ्का, यतः कन्यायां हस्तयोगः प्रतीयते। मिथुनेन च मङ्गलप्रचारः। ततो निश्चितो वनयोगः ।

**कृष्णः**—सखे ! ज्ञातव्यं भवद्वचनप्रामाण्यमिति । ( **नयनयुगलमुन्मील्य सरोमाञ्चम्** ) साधु साधु भोः समीरणसन्ततं जगत्प्राणभूतोऽपि भवान् इदानीमेव मत्प्राणरूपतामुपैति । यतः सकलाङ्गयोगेनापि यन्न बोधगोचरीभूतम्, तत्तदपि करबदरायितं कृतं भवता ।

**गोपार्भकाः**—( **परस्परम्** ) अहो महत्कौतुकम् !

वातविवर्तितवसना नर्तितनयनोत्पलाञ्चला परितः ।
राधा विनापराधं माधवमालोक्य नेक्षितुं क्षमते ॥४२॥

**राधा**—( **ससंभ्रमं चञ्चलचेलाञ्चलेन सकलकलेवरमावृण्वती कुञ्जकुटीरं प्रविशति** ) ।

**भद्रमुखः**—भोः सिरीदाम, भोः सुदाम, भोः वसुदाम ! णिअं णिअं वीणावेणुसिरंगवेत्तवसनादिअं पेखंतु कस्स किंवच्छु चोरिअ वसणेण ढक्किअ राहिआ पलाएदि । ( भोः श्रीदामन् ! भोः सुदामन् ! भोः वसुदामन् ! निजं निजं वीणावेणुश्रृङ्गवेत्रवसनादिकं पश्यन्तु, कस्य किं वस्तु चोरयित्वा वसनेन ढक्कयित्वा राधिका पलायते ) ।

**श्रीदामादयः**—( **विहस्य** ) सखे कृष्ण ! सम्यगाह भद्रमुखः विचार्यमेतत् । प्रथमं भवतः किमादाय गता ।

**कृष्णः**—( **ससंभ्रमम्** ) सखे भद्रमुख ! क्वासौ क्वासौ ? ममैव सर्वस्वरूपं कनककमलकोरकद्वयमपहृतमनया तदतित्वरया भवानानयतु ।

**भद्रमुखः**—जह आणवेदि । ( यदाज्ञापयति ) ( **इति सत्वरं निष्क्रान्तः** )

---

१. ऊष्माणामिति तु मूले ।

**वसुदामा**—( **आकाशे कर्णं दत्त्वा** ) सखे कृष्ण ! कस्येदं रोदनं श्रूयते ?

**कृष्णः**—( **सस्मितम्** ) प्रायो भद्रमुखस्यैव ।

( **ततः प्रविशति रुदन्नेव शपमानो[1] भद्रमुखः** )

**कृष्णः**—( **सगूढस्मितम्, हसतः सखीनवलोक्य तं करे गृहीत्वा** ) सखे ! किं वृत्तम् ? आदितः कथय ।

**भद्रमुखः**—( **सखेदम्** ) इदो गदुअ दुह् कणअकमलकोरअजुगं ताए उरसि विलोईअ वलादेतस्साण अणपवुत्तं मं चोरस्स सहाति मांपि चोरोसित्ति भणिअ अम्ह वसनेन ज्जेव अम्ह वंधनं कदुअ कण्णाणंवोलाणं णासाणं च मोडणं किदं आउंचिदेण पाणिना सिरए पहारो किदो । (इतो गत्त्वा तव कनककमलकोरकयुगं तस्या उरसि विलोक्य वलादेतस्यानयनप्रवृत्तं मां चोरस्य संघातिनं मामपि चोरोऽसीति भणित्त्वा मम वसनेनैव मम वन्धनं कृत्वा कर्णयोः, कपोलयोः, नासयोश्च मोहनं कृतम् । आकुञ्चितेन पाणिना शिरसि प्रहारः कृतः ) ।

**कृष्णः**—( **स्मितं निरुध्य** ) अहो दुःखं दुःखं सखे ! अग्रेसरो भव । ( **इति तेनोपदिश्यमानवर्त्मावित्समीपमागत्य** ) अयि साहसिनि ! परद्रव्यापहारिणि ! कथमयं मम प्राणसमः सहचरस्तिरस्कृतो भवतीभिः ।

**राधा**—( **सलज्जमधोमुखी स्वगतम्** ) अम्हो किं नेदं सिविणो विलसिदं । (अहो किं नु इदं स्वप्नविलसितम् ?) (**प्रकाशं**) सहि किं दाव कधेदि एसो काणि वत्थूनि अवहिदाणि अम्हेहे किं ? ( सखि ! किं तावत् कथयत्येषः, कानि वस्तूनि अपहृतानि अस्माभिः किम् ? )

**कृष्णः**—अयि समीक्ष्यकारिणि ! कथय कथं न मत्काननकुसुमान्यपहृतानि ?

**राधा**—पियसहि ! सुणेहि कानने वि पभुत्तणं एदस्स इति ( प्रियसखि ! शृणु काननेऽपि प्रभुत्त्वमेतस्येति । ( **संस्कृतेन** )—

अटव्यः पर्वता नद्यः पुण्यान्यायतनानि च ।
एतान्यस्वामिकान्याहुर्न हि तेषु परिग्रहः ॥४३॥

इति स्मृतिरपि नानेन दृष्टा ।

**कृष्णः**—अयि ! भवत्यैवानुभवसामग्र्या स्मृतिरपहृता । किं च येषां विरसानां कंसादीनां सकलप्रजावनशून्या तेषामेवात्रास्वाम्यं स्मृतिर्बोधयति,

---

१. मूले 'शपमान एव' इति पाठो दृश्यते, तत्रौचित्यद् एव शब्दस्त्यक्तः ।

अस्माकं तु साधु वृन्दावनसरसनरेन्द्राणां वनवर्तिप्रजाकरग्रहणमेव परमो धर्मः। ( **इति तत्करग्रहणाय करं प्रसारयति** )।

राधा—( **तिर्यङ्निरीक्ष्य** ) शान्तं पावं शान्तं पावं ( शान्तं पापं, शान्तं पापम् ) ( **इत्यपसृत्य** ) सहि ! दिज्जंदु एदास कुसुमाइं। ( सखि ! दीयन्तामेतस्य कुसुमानि ) ( **इति कोपं नाटयन्ती तद्गात्रेषु कुसुमानि क्षिपति** )।

सख्यौ—( **तथा कुरुतः** )।

कृष्णः—( **सप्रमोदम्** ) अहो मन्दबुद्धिता भवतीनां स्तबकस्य द्वन्द्वमुरःपरिसरवर्तिनाम्बरेण संवृतमपि कथं न समर्प्यते।

सख्यौ—( **सगूढस्मितम्** ) अम्हो कधं अंगए वि वच्छुनि पहुत्तणं पअडीकरेसि। ( अहो ! कथमङ्गजेऽपि वस्तुनि प्रभुत्त्वं प्रकटीकरोषि ? )

कृष्णः— राधे ! मुग्धैव ते वयस्या। यत्तवानङ्गजेऽप्यङ्गजेऽपि ममाभङ्गुरमधिकारं पश्यन्त्यपि न पश्यति। यतः—

याभ्यां युता त्वं जयिनी जगत्यामौन्नत्ययुग्भ्यां स्तनमण्डलाभ्याम्।
तत्रापि मत्स्वाम्यनिवेदकं किं श्यामं महः पश्यति नैव मुग्धा ॥४४॥

अपि च चौर्यपराधान्नैतावता मुच्यते। यतः—

किसलयपटलं ते पाणिपादाधरौष्ठं
स्तबकयुगमुरोजौ चम्पकान्यङ्गकानि।
कुवलयकुलमक्षिद्वन्द्वमम्भोजमास्यं
वद किमिति भवत्या लुण्ठितास्मद्वनश्रीः ॥४५॥

सख्यौ—( **सस्मितम** ) अये ! परचित्त तक्कर तुमंपि परिहर सहिए हएदं पीदंवरं। ( अये ! परचित्ततस्करत्वमपि परिहर सख्या हृतं पीताम्बरम् )।

कृष्णः—राधिके ! साधु वदति सखीति गृहाण गृहाण। इदं मद्रूपचिह्नितं मे देहि। ( **इति पीताम्बरं प्रदर्श्य तच्चित्राम्बरमाकर्षति**)।

राधा—मुञ्च मुञ्च चेलाञ्चलं निर्लज्ज, किमेवमुन्मत्तोऽसि। ( **नेपथ्ये** ) पुत्ति, राहे ! पुत्ति चंदाअलि ! दाणिंपि कुसुमावच अनरवेला ण विरमदि। ( पुत्रि राधे ! पुत्रि चन्दावलि ! इदानीमपि कुसुमावचयनवेला न विरमति ? )

राधा—(**समाकर्ण्य स्वगतं**) हद्धी हद्धी हा विधे पाणिदलामिलिद चिंतामणिं परिमुंचि अकाणवराड अलाहहल्लं कालसप्पविलं पविसामि। जं एस धत्ती आअरिदि। ( हा धिक् ! हा धिक् ! हा विधे ! पाणिनले मिलितचिन्तामणिं

परिमुच्य काणवराटकलाभार्थं कालसर्पविलं प्रविशामि । यद् एषा धात्री आकारयति ) । (इति कातराक्षी पुनः पुनः प्रियमुखमीक्षमाणा सखीभिः सह निष्क्रान्ता) ।

कृष्णः—( सविषादमात्मगतम् )

चिरदिनचितैः पुण्योत्कर्षैः सरोरुहलोचना
प्रियतमधियं मय्या[1]धत्ते मुदैत्यथ चान्तिकम् ।
करतलगतां तां चेद्राधां ममाधिमहौषधीं
विधिरपहरेत्क्वाशा प्राणेष्वनङ्गभुजङ्गमात् ॥४६॥

अपि च—

न पीतं माध्वीकं न च परिमलोऽऽघ्रायि न कृतं
समाश्लेषादस्या विरहदहनोत्तापशमनम् ।
प्रसूतेश्चूतस्य भ्रमरतरुणेनेह हतकः
कथं झञ्झावातो विघटयति हा हन्त मिलनम् ॥४७॥

( प्रकाशम् ) हंहो प्रियवयस्याः ! चिरं वनविहारेणैव समयो यापितः । तदधुना सदनमेव साधयामः । ( सर्वे यथारुचितं प्रियसखायः ) ।

( इति निष्क्रान्ताः सर्वे )

॥ इति[2] मुग्धमधुसूदनो नाम द्वितीयोऽङ्कः ॥

---

१. मूले 'मय्यानंदंदत्ते' इति विश्रृङ्खलः पाठः । २. मूले 'इति' नास्ति ।

# ॥ अथ[1] तृतीयोऽङ्कः ॥

**( ततः प्रविशति रुचिमती )**

**रुचिमती**—( **पुरोऽवलोक्य** ) कधं एसा वणदेवता ? ता उपसप्पिअ प्पणमामि । ( कथमेषा वनदेवता ? तदुपसृत्य प्रणमामि । ) ( **इति कानिचित्पदानि परिक्रामति** ) ।

**( प्रविश्य )**

**वनदेवता**—( **सवात्सल्यम्** ) वत्से ! कथय कुतोऽसि ? अपि कुशलं वत्साया राधिकायाः ?

**रुचिमती**—( **सप्रणयं प्रणम्य** ) देवि ! इदाणीं कुशलं भविस्सदि । (देवि ! इदानीं कुशलं भविष्यति ) ।

**वनदेवता**—( **सवितर्कमात्मगतम्** ) अहो ! वत्सस्य श्रीव्रजराजकुमारस्येव हृदयं कापि बाधा राधाया अपि बाधत इव । ( **प्रकाशम्** ) वत्से ! किमिदमाभाषितं भवत्याः कथय सरहस्यम् ।

**रुचिमती**—देवि ! किं कधनिज्जं तहवि कधेमि । ( देवि ! किं कथनीयं तथापि कथयामि । ) ( **इति संस्कृतेन** ) देवि ! अद्य सा मे प्रियसखी—

स्वपिति न शयने न वा धरण्यां न च नलिनेषु न पल्लवेषु नाङ्के ।
कलयति सकलं विषेण तुल्यं हरि हरि केन कृतास्ति चित्तशून्या ॥ १ ॥

**वनदेवता**—वत्से ! भवतीभिः किमाकलितमस्ति ?

**रुचिमती**—देवि सुणेहि ! अज्ज दावतधाभूदं तं विलोइ सहीहि मणोअरंजिनी मअणमोइणीहिं पुच्छिदं । (देवि श्रूयताम् अद्य तावत्तथाभूतां तां विलोक्य सखीभ्यां मनोजरञ्जिनीमदनमोहिनीभ्यां पृष्टम् ) ।

**वनदेवता** ततः किम् ?

**रुचिमती**—( **संस्कृतेन** )—

---

१. 'मूले' नास्ति ।

सुवर्णं यद्वर्णस्तिरयति वपुस्तद्गतमहः
शशाङ्कं शङ्कां यद् गमयति तदुत्ताम्यति मुखम् ।
त्रपापात्रं याभ्यामसितशतपत्रं सुतनु तद्
दृशोर्द्वन्द्वं मन्दद्युति किमिति हा हन्त रुदितैः ॥ २ ॥

**वनदेवता**—ततस्तया किमपि समालपितम् ?

**रुचिमती**—तदो तएदं गदिदं । ( ततस्तयेदं गदितम् )—

गरलं हिमअरकिरणो तुलेदि मलआनिलो विअणलं ।
ललिदं कोइलगीदं भण सहि केणज्ज सल्लदं णीदं ॥ ३ ॥
( गरलं हिमकरकिरणस्तुलयति मलयानिलोऽप्यनलम् ।
ललितं कोकिलगीतं भण सखि केनाद्य शल्यतां नीतम् ॥ ३ ॥ )

**वनदेवता**—ततस्ततः ।

**रुचिमती**—तदो सहीहिं भणिदं । पिअसहि तत्तं कधेहि । णहि अणिण्णीदणिआणेण चिईच्छअवरेणावि णिराकरणिज्जो अंतगादो रोओ । ( ततः सखीभ्यां भणितम्—प्रियसखि तत्त्वं कथय । नहि अनिर्णीतनिदानेन चिकित्सकवरेणापि निराकरणीयोऽन्तर्गतो रोगः ) ।

**वनदेवता**—ततस्ततः ।

**रुचिमती**-तदो पिअसहीए ओणतरुणमुहीए किंपि भणिदुमुवक्कदं । ( ततः प्रियसख्या अवनतरुदितमुख्या किमपि भणितुमुपक्रान्तम् ) ।

**वनदेवता**—( **सोल्लासं** ) ततस्ततः ।

**रुचिमती** ( **संस्कृतेन** ) ततस्तयोक्तम्—

श्यामः कोऽपि कदम्बकाननगतः पूर्णेन्दुबिम्बाननः
किं वा गोतमनेन हन्त मुरलीमालम्ब्य बिम्बाधरे ।
तेन द्रागमृतद्रवेण नितरामातर्पितोऽयं जन-
स्तेनैवोद्भटकालकूटशिखिना हा हन्त दन्दह्यते ॥ ४ ॥

**वनदेवता**—वत्से ! किं कथनीयं भवत्प्रियसख्या राधिकाया भागधेयम् । वत्सोऽपि तदालोकनावधि—

क्रीडासु प्रकटीकृतासु सखिभिर्न प्रीयते प्रीणय-
त्येतान्नो मुरलीस्वनैर्न च परीहासोपयुक्तोक्तिभिः ।
नो रज्यत्यलिगुञ्जितेन च कलं केली शुकोज्जल्पने
प्राणानामपि रक्षणे प्रति पदं मन्दादरो नन्दजः ॥ ५ ॥

**अपि च—**

आलोक्यैष रसालबालमुकुला[1]न्याश्लिष्य भास्वत्सुता-
वातानन्यभृता रुतानि मधुराण्याकर्ण्य कर्णान्तिके ।
दृक्शल्यान्यतुलानलान् बलवतो हालाहलान् मन्यते
राधास्येन्दुविलोकनावधि निगू[2]ढाधिप्लुतो माधवः ॥ ६ ॥

**रुचिमती—**( सोल्लासं ) देवि ! किं कधेसि सच्चंज्जेव एदंम्हि । ( देवि ! किं कथयसि सत्यमेवेदमपि ) ।

**वनदेवता**—वत्से ! इदमपि वत्सायै राधिकायै श्रावयितव्यं वत्सस्य सानुरागालपितम् । तथाहि—

पटीरः कर्पूरं हिमरुचिकरश्चन्दनगिरेः
समीरश्चोशीरं शिशिरमिति धीरस्य न गिरः ।
प्रियायाः संपर्के यदपि हिमतामीषु सहजं
न तन्मन्ये वह्निष्विव जयति सिद्धौषधिरसे ॥ ७ ॥

**रुचिमती—**देवि ! एवंज्जेव तहाविहा महाणुभावा अणुगदजणवच्छला होंति । ( देवि ! एवमेव तथाविधा महानुभावा अनुगतजनवत्सला भवन्ति ) ।

**वनदेवता**—वत्से ! न परं वत्सला एव । अवधीयताम्, निशितशल्यकीलितहृदयं क्षत्रियधुरन्धरं धैर्येणावधीरयति । तथाहि—

अस्रं तस्करभीतपान्थधनवन्नेत्रान्तरे केवलं
'हा' रावो हृदये परं निशि सरोजान्तर्भ्रमद्भृङ्गवत् ।
श्वासस्तीव्रतरो बहिर्वनभुवः पारीन्द्रवन्मन्मथः
क्रोडे भूमिरुहोऽग्निवन्मधुरिपो राधावियोगावधि ॥ ८ ॥

तद्वत्से ! कथय सम्प्रति क्व प्रस्थिताऽसि ?

**रुचिमती—**गोउलिंदस्स मंदिरं । ( गोकुलेन्द्रस्य मन्दिरम् ) ।

**वनदेवता—**वत्से ! उचितमेवैतत् । तददूर एव नन्दमन्दिरम् । तत् त्वरितमेव प्रविश्य स्वसमीहितं सम्पादय । अहमपि स्वकार्याय गच्छामीति ( **निष्क्रान्ता** ) ।

---

१. मुकुलाश्लिष्यत्प्रभास्वत्सुतेति मूलेऽपपाठः ।

२. 'निगूहा' इति मूले ।

**रुचिमती**—( [1]**स्वगतं** ) पिअसहि किं भणिदव्वासि सेव्वधज्जेव दिठिआ वढसि इति। (प्रियसखि ! किं भणितव्यासि सर्वथैव दिष्ट्या वर्द्धस इति)। (**कतिचित्पदानि परिक्रम्य**) इदमिदं णंदभअणं ता जाव प्पविसामि। (इदमिदं नन्द-भवनं तद् यावत् प्रविशामि )। ( **इति प्रवेशं नाट्यति** ) ( **नेपथ्ये** ) अम्हो अज्जवि गोचारणादोण णिवढिदो वत्सो। ( अहो इदानीमपि गोचारणान्न निवृत्तो वत्सः )। ( **श्रुतिमभिनीय** ) अहो गोउलेसरोए आलावो सुणीअदि ताइधज्जेव्व होदव्वं तए। ( अहो गोकुलेश्वर्या आलापः श्रूयते। तदत्रैव भवितव्यं तया ) ( **इति परिक्रामति** )।

( **ततः प्रविशति सुचरिता-सुभाविणीभ्यां सह यशोदा** )

**यशोदा**—अइ सुअरिदे ! कधं अजवि ण आअदो वत्थो। (अयि सुचरिते ! कथमद्यापि नागतो वत्सः ? )

**सुचरिता**—देवि ! आअदप्पाओ ता पेक्खामि दुआरदेसं। ( देवि ! आगतप्रायस्तत्पश्यामि द्वारदेशम् )। ( **इति पुरद्वारमालोक्य** ) देवि ! विसभानु-भअणादो कावि तुह चरणांतिअं आअच्छदि। ( देवि ! वृषभानुभवनात् कापि ते चरणान्तिकमागच्छति )।

**यशोदा**—( **सकौतुकम्** ) णिरूवेहि का एसा। ( निरूपय का एषा ) ( **इत्युभे निरूपयतः** )

( **उपसृत्य** )

**रुचिमती**—णमो-णमो गोउलेसरीए चरणकमलाणं। ( नमो नमो गोकु-लेश्वर्याश्चरणकमलाभ्याम् )।

**यशोदा**—पुत्ति ! पच्चासापल्लविणी फलवदी होदु। कधेहि कच्चिविस-हाणुभअणे भाउअं ? (पुत्रि ! प्रत्याशापल्लविनी फलवती भवतु। कथय कच्चि-द्वृषभानुभवने भावुकम् ? )

**रुचिमती**—तुम्हाणं चरणपसादादो तधा भविस्सदि। ( युष्माकं चरण-प्रसादात्तथा भविष्यति )।

**यशोदा**—( **सविस्मयम्** ) पुत्ति ! किं कोवि विसेसोत्ति ? ( पुत्रि ! किं कोऽपि विशेषोऽस्ति ? )

---

१. मूले 'स्वगतम्' इति नास्ति।

**रुचिमती**—सुणीयदु। ( श्रूयताम् )। ( **संस्कृतेन** )—

यशोदे देवि त्वं जगति जयिनी यज्जठरभू-
रिहोत्तंसं पुंसां सुतमधृतसंसारसुखदम्।
तथास्त्रीणां रत्नं दुहितरमिमां या धृतवती
हृदा राधां बाधां त्यजति न मनाक् साऽपि सुरसा ॥ ९ ॥

**यशोदा**—( **सविस्मयम्** ) पुत्ति ! सुरसाएवि वइमनस्सं इति। ( पुत्रि ! सुरसाया अपि वैमनस्यम् ? इति ) ( **संस्कृतेन** )—

धनं च तादृग् भवनं च तादृक् पतिश्च यस्या वृषभानुरेषः।
सा किं न धन्यास्तु यदीयकन्या राधा न साधारणपुण्यजन्या ॥ १० ॥

**अपि च**—

जनुरनुमतवंशे शैशवे क्रीडनं च
प्रभवति तरुणिम्नि प्रेयसा प्रेमसङ्गः।
तदनु सुततनूजास्तद्विवाहश्च योग्यै-
रिति हि जगति योग्या सुभ्रुवां भाग्यसीमा ॥ ११ ॥

**रुचिमती**—देवि ! सअलंज्जेवएवं किंदु राहाणुरूअवरं अलहमाना विमनाएदि। जदो। ( देवि ! सकलमेवैवम्; किन्तु राधानुरूपवरमलभमाना विमनायते। यतः ) ( **संस्कृतेन** )—

कविता सुता च साध्वी सगुणालङ्कारशालिनी सरसा।
जनयति जनकविषादं कुपुरुषनिहिता यदा भवति ॥ १२ ॥

साविदाणीं सामभुअंगफंसादो जीवनसंसआहिरूढव्व लच्छीयदि। ( साऽपीदानीं श्यामभुजङ्गस्पर्शाज्जीवनसंशयाधिरूढेव लक्ष्यते )।

**यशोदा**—अहो प्पमादो ! अहो प्पमादो ! सुअरिदे ण आणम मंदभाइणीए मह कहिं किं होदि चरणेहिं गोवडिंभेहिं कुमारो वणे-वणे सिज्जंतो [1]कहिं कां दशं लहदि। पेक्ख अज्जवि णाअदोत्ति। ( अहो प्रमादः ! अहो प्रमादः ! सुचरिते न जानामि मन्दभागिन्या मम कुत्र किं भवति, चारकैर्गोपडिम्भैः कुमारो वने वने सीदन् कुत्र कां दशां लभते। पश्येदानीमपि नागतोऽस्ति )। ( **नेपथ्ये** ) वत्स ! एहि एहि।

---

१. मूले 'कहि' इत्यनुस्वाररहितः पाठः।

प्राणास्त्वमेव हृदयस्य दृशोः प्रमोददीपस्तनो[1]श्च हरिचन्दनपङ्कलेपः।
भूषाश्रुतेर्मधुरसो रसनस्य वत्स क्लान्तिः कथं वदनचन्द्रमसस्तवाद्य ? ॥ १३ ॥

**सुचरिता**—गोउलेस्सरि ! अअं गोउलिंदो जधा जंपदि तधा तक्केमि कुमारो आअदोत्ति। (गोकुलेश्वरि ! अयं गोकुलेन्द्रो यथा जल्पति तथा तर्कयामि कुमार आगत इति )।

**यशोदा**—सुचरिदे ! णिरूवेहि। ( सुचरिते निरूपय )। ( **पुनर्नेपथ्ये** ) महाराजः प्रायशः प्रमोदोद्रेकोऽत्र निदानम्। यतः—

कृपणा हि धनानीव स्वापत्यानि कुटुम्बिनः।
पूर्णानप्यतिरागेण न्यूनानीति विजानते॥ १४॥

( **पुनस्तत्रैव** ) वत्स कृष्ण ! मम समस्तं भवानेव, त्वद्वदनद्युतिमन्दतावलोकनक्लेशः कथं कथनीयः। यतः—

विद्यावयोद्रविणवन्धुवसुन्धराप्तशौर्यादिभिर्भवतु सर्वजनः सगर्वः।
तत्तद्गुणैर्विरहितो[2]ऽपि वहामि गर्वगीर्वाणपर्वतमहं भवतात्मजेन॥ १५॥

**यशोदा**—सुचरिदे ! [3]सच्चंजेव कुमारेण सह संकधेदि गोउलेसरो। तावच्छे रुचिमदि[4]तुमंपिदाणीं णियमंदिरं अणुसर। अहंपि कुमारस्स सिणाणभोअणपाणसामग्गी कदु आअच्छामि। ( सुचरिते ! सत्यमेव कुमारेण सह संकथयति गोकुलेश्वरः। तद्वत्से रुचिमति ! त्वमपीदानीं निजमन्दिरमनुसर। अहमपि कुमारस्य स्नानभोजनपानसामग्रीं कृत्वा आगच्छामि )।

( **इति निष्क्रान्ता** )

## ( प्रवेशकः )

( **ततः प्रविशति वयस्यैः सह समागतं कृष्णं लालयन्नन्दः** )

**नन्दः**—वत्स ! आस्तामन्यप्रशस्तगुणगणना।

कंसो भोजवतंस एष सततं निस्सीमभूमीभुजां
वृन्दैर्वज्रकरादिभिश्च विवुधैर्वृन्दारकैर्वन्द्यते।
धत्तेऽसंख्यमदान्धसिन्धुरबलं कालानलो विद्विषां
तुच्छोऽस्मिन् हृदये तु भाति भवता पुत्रेण मे पुत्रिणः॥ १६॥

---

१. मूले 'तवश्च' इत्यशुद्धः पाठः। २. 'विरहितापि' इति मूले अशुद्धः पाठः।
३. मूले 'सव्वं' इति पाठः। ४. मूलपुस्तके 'रुद्रमति' इति पाठो न संगतः।

**श्रीदामादयः**—(**सपुलकम्**) महाराज ! एवमेवास्माकं सुहृदामपि हृदयम् । शतशोऽस्माभिस्तथानुभूतम् । तथा हि—

यद्रोहिणीजठररत्नखनिप्रसूत
नीलांशुकांशुकसमांशुमदङ्गजाम्भः ।
तत्पातुमुत्कमनसस्तु वयं निगीर्णाः
केनापि सोऽपि सहसा हरिणा हतोऽभूत् ॥ १७ ॥

**नन्दः**—( **सचकितम्** ) वत्स ! कोऽसौ निहतः सिंहेन ?

**सखायः**—सिंहपराक्रमेणैव, न तु सिंहेन ।

**नन्दः**—( **सोल्लासम्** ) सुदामन् ! सविशेषमाख्याहि ।

**सुदामा**—( **सहर्षम्** )

ऊर्ध्वाधोविस्तृताभ्यां दिवमथ वसुधां यस्य चञ्चूपुटाभ्या-
माकृष्टां वीक्ष्य दष्टादिति दनुतनयाः कष्टिताविष्टपस्ताः ।
तस्यास्यं संप्रविष्टान् पशुपशुपशिशून् पिष्टवन्नष्टचेष्टान्
दृष्ट्वा रुष्टः कृपार्द्रस्तमसुरमवधीन्माधवोऽस्मानपाच्च ॥ १८ ॥

**नन्दः** – ( **सानन्दम्** ) अये किन्नामासौ ?

**सुदामा**—प्रायशो वकनामैष भविता यत् खलु स्तुवद्भिरेव सुपर्वभिर्जय जय कृष्ण त्रिलोकी हृत्कण्टको वकोऽद्य निहतो भवता वत्सकश्चेति समुदीरितम् ।

**नन्दः**—( **सवात्सल्यं कृष्णमालिङ्गयन्** ) सुदामन्[1] ! वत्सकोऽपि निहतः ?

**सुदामा**—अथ किम्. शृणोतु महाराजः—

वत्सानुत्पुच्छ[2]गांस्तांस्त्वरितमनुसृतः स्वेच्छया वत्सवद्यः
पश्चात्तान् वत्सपांश्च ग्रसितुमभिमुखः कुत्सितात्युच्चकायः ।
तच्छायाच्छादिताच्छच्छविदिवि मिहिरं मूर्च्छिताञ्छक्रपूर्वा-
स्तुच्छान् [3]प्रेक्ष्योच्छलश्रीस्तमपि निहतवानेष गोपेश ! कृष्णः ॥ १९ ॥

**गोपाः**—( **सविस्मयानन्दाभिनन्दं नन्दं प्रति** ) हंहो व्रजपते ! किं भणित-व्योऽसि—

---

१. 'वसुदामन्' इति मूले पाठोऽसंगतः । २. 'नत्युच्छगुत्त्वं' इति मूलेऽपपाठः ।
३. 'प्रेक्षो' इति मूले ।

विकचकुसुमवृन्दैः स्पन्दमानैर्मरन्दैः
कति कति फलवन्तो न द्रुमाः कान्तिमन्तः ।
तदपि विजयलक्ष्मी लक्षितो[1]ऽयं रसाल-
स्तिरयति फलसंपद् यस्य पीयूषधाराम् ॥ २० ॥

**नन्दः**—( **सप्रमोदं कृष्णमालिङ्ग्य** ) वत्स ! त्वदागमनविलम्बमालक्ष्य निरालम्बनेव तवाम्बा । तदधुनान्तःपुरं प्रविश्य तामानन्दय । यतः—

मातुर्यथा जगति वत्सलतेह वत्से नैवंविधा पितुरपि क्व नु सा परेषाम् ।
यस्याः पयोधररसक्षरणच्छलेन व्यक्तं द्रवीभवति हृत्तनये स्मृतेऽपि ॥ २१ ॥

**अपि च—**

माता पालयते सूनुं दूनापीति किमद्भुतम् ।
अरणिर्दह्यमाना किं न वर्द्धयति पावकम् ? ॥ २२ ॥

तत्तात ! त्वमधुना स्वमातरमानन्दय । वयं तावद्विपिनमध्यात्कार्यान्तरं प्रसाध्यागच्छामः । ( **इति निष्क्रान्तः** )

**कृष्णः**—( **पुरोऽवलोक्य** ) कथमविदूर एव मातृचरणाः, तत् त्वरितमुपसर्पामि । ( **इति तथा करोति** )

( **प्रविश्य** )

**यशोदा**—( **सानन्दमालोक्य स्यन्दमानस्तनी समाश्लिष्य चिबुकमुन्नमय्य मूर्द्धानमाघ्राय च सास्रं संस्कृतेन** )

यत्ते महेन्द्रमणिदर्पणकान्तिशालि गण्डद्वयं वदनमिन्दुमधःकरोति ।
किं भोस्तदद्य हिमपातनचूर्णिताचिरम्भोरुहभ्रमपदं वद वत्स कृष्ण ? ॥२३॥

**कृष्णः**—( **नतवदनम्** ) मातर्न वेद्मि कथमेवं विलोकयसि ?

**यशोदा**—वत्स सुदामन् ! जानासि किमिदमिति ?

**भद्रमुखः**—( **सस्मितम्** ) कौदुआउलिदो तामादादुं चलिदो तह्वहि विमनाइदो कण्हो । (कौतुकाकुलितस्तामादातुं चलितस्तदवधि विमनायितः कृष्णः) ।

**यशोदा**—जाद कधं न लद्धा सा । जात ! कथं न लब्धा सा ? )

**भद्रमुखः**—अंव तक्वणंज्जेव ठानंतरं पट्ठिदा । ( अम्ब ! तत्क्षणमेव स्थानान्तरं प्रस्थिता ) ।

---

१. 'लक्षितेयं' इति मूले ।

**यशोदा**–जाद सा किल वणदेवदा भवे। (जात ! सा किल वनदेवता भवेत्)।

**भद्रमुखः**—अम्ब एवंज्जेव जदो सअलगोउलवालानंप्पि विविणगदाणं विआलुदं अवगच्छेम्ह। ( अम्ब ! एवमेव। यतः सकलगोकुलबालानामपि विपिनगतानां व्याकुलतामवगच्छामः )।

**यशोदा**—( **सभयम्** ) भअवदि वणदेवदे ! मदिसि दुग्गावजनकरुणामिद-देव तरंगिनि अंव ! तनअं एदं मम परित्राहि णेअं विचित्य पुत्तआसिरीदामप्प-मुहादाणि तुम्हेपि अंरव्वं अणुसरेअ किदसिणाणभो अणापुणेवि आअच्छध। वच्छोवि वणविहारपडिस्समं मुंचेदु। ( भगवति वनदेवते ! मादृशदुर्ग्राम्यजन-करुणामृतदेवतरंगिणि ! अम्ब ! तनयमेतं मम परित्रायस्व, निजं विचिन्त्य पुत्रकाः श्रीदामप्रमुखाः ! यूयमपि निजगृहम् अनुसरत। कृतस्नानभोजनाः पुन-रप्यागच्छत। वत्सोऽपि वनविहारपरिश्रमं मुञ्चतु )। ( **इति तान् विसृज्य पुत्र-मादाय पुरं प्रविशति** )।

( **सखायः सर्वे निष्क्रान्ताः** )

**यशोदा**–जाद ! एहि एदेण सुगन्धिगन्धतेल्लेण अम्बंग्गं कदुअ एदेण मसिणसिणिद्धगंधचुणेण विदुव्वट्टनं कदुअ एदेहिं वासिदसीदलसलिलेहिं सिणाहि। (जात ! एहि, एतेन सुगन्धिगन्धतैलेनाभ्यङ्गं कृत्वा एतेन मसृणस्निग्ध-गन्धचूर्णेनोद्वर्तनं कृत्वा एतैर्वासितशीतलसलिलैः स्नाहि )।

**कृष्णः**—अम्ब ! नेह मया स्नातव्यं[1] मज्जनमेव मह्यं रोचते। तत् पुरदीर्घिकावगाह एव कर्त्तव्यः।

**यशोदा**—जाद ! एत्तिअं कालं वने कीलिदं तहवि कीलनेच्छा ण विरमदि। किं कादव्वं मंदभाइणिए ता अंवाए सीसं भुंजेसि जइ बिलंवेसि। (जात ! इयन्तं कालं वने क्रीडितं तथापि क्रीडनेच्छा न विरमति। किं कर्तव्यं मन्दभाग्यया तद् अम्बायाः शिरः स्पृशसि यदि विलम्बसे )।

**कृष्णः**—अम्ब ! मा [2]विलम्बनीयम्। ( **इत्यङ्गोद्वर्तनस्नानादिसामग्री-पाणिभिर्धात्रेयिकाभिः सह परिक्रामति** )।

**यशोदा**—न आणे किं पक्वणं जामदच्छि किं वा रोअदि जादस्स तं अधुसंधेमि। ( न जाने किं पक्वान्नं तावदस्ति, किं वा रोचते वत्सस्य तदनु-संदधे )।

---

१. स्थातव्यमिति मूले। २. 'मा लम्बनीयम्' इति मु० पु०।

( **इति निष्क्रान्ता** )

**धात्रेयिका**—अरे कण्ह इदो इदो पुलदीहिआ। ( अरे कृष्ण ! इत इतः पुरदीर्घिका )।

**कृष्णः**—( **स्वगतम् पुरोऽवलोक्य** ) हा धिक् ! कथमविचारितमेवैतत्पुरवापीस्नानमाकाङ्क्षितम्। यतः—

उपसरति सरस्याः शीकरे केसराणा-
मपि सरसपरागे गात्रदाहो न चित्रम्।
हृदयतृणकुटीराभ्यन्तरोद्यत्स्मराग्नि
प्रकटयति पटीरारण्यवातोऽस्य मित्रम् ॥ २४ ॥

( **नेपथ्ये** ) एवमेव—

नवकिसलयलक्ष्मीः काननान्तेष्वनन्ता
कमलदलविसश्रीराशयेष्वम्भसां च।
विपणिषु घनसारो शीरपाटीरसंप-
त्क्षयमगमदमु[1]ष्याः केन शैत्यं पुनः स्यात् ॥ २५ ॥

**कृष्णः**—( **पुरोऽवलोक्य** ) अहो कथमियं राजमरालबालास्फुटाक्षरमेव जल्पति ? तत् किमपि रहस्येनात्र भवितव्यम्। ( **इति दीर्घिकातटमुपसर्पति। पुनस्तत्रैव** )—

हृता पण्डिम्नासीद्वदनसुषमापण्डिममह-
स्तदप्युच्चैः क्षीणं प्रतिपदसमुद्यत्कृशतया।
अजस्रैरस्रौघैर्वपुषि पिहिते साऽपि कृशता
न दृश्या चेद् ब्रूमः कथमहह राधाविरहिणीम् ॥ २६ ॥

**कृष्णः**—( **सचमत्कारपुलकाञ्चम्** ) अहो सत्यमियं राधान्तःपुरसरसीविहारिणी राजहंसी। तदेषैव मे शरणम्। ( **इति तदुपकण्ठमुपसर्पति** )।

**धात्रेयिका**—अम्हो ! अच्चलियं हंशीवि माणुशशद्दं कलेदि। ( अहो आश्चर्यं हंस्यपि मानुषशब्दं कलयति ! ) ( **इति सकौतुकं पश्यन्ति** )।

( **ततः प्रविशति यथानिर्दिष्टा सरोवरविचारिणी हंसी कृष्णमुपसर्पन्ती** )

---

१. मूले "क्षयमगदमनुष्याः केन सैन्यं पुनः स्यात्" इति पाठोऽसंगतार्थः। तेन संशोधितः पाठ एव परममूलपाठः संगतार्थश्चावधेयम्। संशोधितः पाठश्चेत्थम्—**"क्षयमगमदमुष्याः केन शैत्यं पुनः स्यात्"** इति।

**कृष्णः**—हंहो राजहंसवंशावतंसनन्दिनि ! कथय क्वत्येयं गाथा ?

**हंसी**—भो गोकुलेन्द्रनन्दन ! राधान्तःपुरसरोवरविहारकाले तत्सखीनां मिथोऽनुलापादेतत्पद्यद्वयमश्रौषम् ।

**कृष्णः**—राजहंसि ! अपि दृष्टा सा ?

**हंसी**—भो वल्लवराजकुमार ! अवधीयताम्, दृष्टैव सा ।

आलीनां गलदश्रुजल्पितशतैर्न स्वल्पमप्युत्तरं
नाङ्गस्यावरणं क्वचिद् गुरुजनेऽप्यभ्यासमासादिते ।
स्पन्दो मन्दतमोऽपि नैव सुतनोः श्वासोऽपि नाश्वासभू
रोमाञ्चात्परमस्तु जीवितकथा त्वन्नामतो माधवः ॥२७॥

**कृष्णः**—( **मुखमुत्तानीकृत्य अस्रं निवारयति** ) ।

**धात्रेयिका**—कधं कमलपलाअपडलो कण्हस्स लोअणे व्वाधेदि । ( कथं कमलपरागपटलः कृष्णस्य लोचने बाधते ? )

**कृष्णः**—( **सावहित्थम्** ) हंसि ! पुनः कथय ।

**हंसी**—किं कथयितव्यम्—

चेत्युक्ते मनुते गते मम दृशौ वित्ते मकारश्रुतौ
मद्देहे दहनः श्रुतिविदलिते जानाति को वर्णतः ।
पश्येच्चन्द्रमसं स्पृशेन्मलयजं वातं तथा कोकिलो-
द्गीतं चेच्छृणुयात्तदा स्मृतिभुवा राधा कथं जीव्यताम् ॥२८॥

अपि चेदानीमेवं शंक्य[१]ते—

चित्तं चेन्न हृतं त्वदीयचरितैर्मग्नैव चिन्ताम्बुधौ
दग्धैव प्रियविप्रयोगशिखिना चेन्नास्रधारा सरित् ।
प्राप्त्याशापि न चेत्तव प्रियतमा त्यक्तैव जातासुभिः
शान्तैव प्रभुता स्मरस्य भुवने नो चेदियं जीवति ॥२९॥

**कृष्णः**—( **सवैकल्यं स्वगतम्** )—

कलाः कुत्रास्तां भो जगति भवतीनां स्थितिरये
न लावण्य ! प्रायस्त्वमपि भवितासि त्रिभुवने ।
विलासाः शोच्यत्वं भवनविरहे हन्त भवतां
न ते सौन्दर्यास्ते पदमहह नो चेच्छ्व[२]सिति सा ॥३०॥

---

१. 'शक्यते' इति मूलपुस्तके । २. 'चेत् श्वसिति' इति मू० पु० पाठः ।

( इति वैवश्यं नाटयति )

**धात्रेयिका**—अले कण्ह ! अंवए शवधो दिणो कधं विलंबेसि। ताएसो वलाई हंसी विलंवाएदि। ताएणं दूरीकलेम्ह। ( अरे कृष्ण ! अम्वया शपथो दत्तः कथं विलम्बसे, तदेषा वराकी हंसी विलम्वयति । तदेनां दूरीकुर्मः ) ( **इति तामुड्डापयति** )।

**कृष्णः**—( **सविषादमात्मगतम्** ) अहो पामरस्य विधेर्दुर्विलसितमिदम्। ( **प्रकाशम्** ) धात्रेयिका मैवं कुर्वन्तु। शृणुत किं कथयति। हंसि !

अयि चल कुरु यत्नै रक्षणं राधिकाया
बलवति मम पुण्ये किं विधाता विधाता।
कथय सकलमेतत् पश्यसीहापि यादृक्
श्वसिमि यदि तदाऽहं दास एवास्मि तस्याः॥ ३१ ॥

**धात्रेयिका**—अहो विलंबं कलेदि एसा पामली। ( अहो विलम्वं करोत्येषा पामरी )

( **इति सर्वाभिरुड्डायिता** )

**कृष्णः**—( **स्वगतम्** ) अहो धातुर्वैशर्समिदम्, भवतु कृतस्नानेनाधुना मातुर्विनोदाय भवितव्यम्। ( **प्रकाशम्** ) धात्रेयिकाः ! आनीयतां स्नानसामग्री। ( **इति ताभिः सह स्नानार्थं निष्क्रान्तः** )।

( **ततः प्रविशति सहचरीभिरुपचर्यमाणा राधा** )

**राधा**—हला मअणमोइणि ! हला मणोअरंजिनि ! सुणेहि। ( हला मदनमोदिनि ! हला मनोजरञ्जिनि ! शृणु )। ( **संस्कृतेन** )—

नवपल्लविताः सम[1]न्ततो लतिकाः सोत्कलिकाः सहस्रशः।
मधु तासु पिबन् मधुव्रतः कथमेनामुपयातु यूथिकाम्॥३२॥

**सख्यः**—हला राहिए मा एव्वं भण। ( हला राधिके ! मैवं भण )। ( **संस्कृतेन पठन्ति** )—

रामास्त्वदन्या मदनस्य तन्त्रे प्रावीण्यभाजोऽपि मुदे न तस्य।
सौदामिनी नाङ्कगता यदि स्यात् का नाम कान्त्यै नववारिदस्य॥३३॥

---

१. मूले 'समस्ततो' इति पाठः।

**अपि च—**

नो भुङ्क्ते न पिबत्यपि स्वपिति नो न स्वीकरोत्यासनं
व्याहारव्यवहारनर्मनिपुणान् वीक्ष्यापि रुक्षा[1]यते।
नो नन्देन यशोदयापि च बलेनापि क्रियावानि[2]व
प्राणानेव दधाति नन्दतनयस्त्वच्चिन्तया सुन्दरि ! ॥३४॥

**राधा**—किं एव्वं मं उपहसेसि। ( किमेवं मामुपहससि )।

**सख्यः**—णहि णहि, वणदेवदामुहादो सुदं एदं। ( नहि नहि वनदेवतामुखाच्छ्रुतमिदम् )।

**राधा**—(**सोद्वेगम्**) हला सहिओ अलमलं एदिणा भाअधेय संभाअणपधादीदाए मम समुत्तंभणेण किंदु पच्छुदं कधेहि। ( हला सख्यः ! अलमलमेतेन भागधेयसंभावनपथातीताया मम समुत्तम्भनेन, किन्तु प्रस्तुतं कथयत )। (**संस्कृतेन**)—

ज्वलतु मलयवातश्चर्चितः कालसर्पैस्तपतु हिममयूखः सोदरोऽयं विषाणाम्।
तुदतु मधुपमाला मारचापस्य मौर्वी किमिति सखि रसालः पल्लवैः कालकल्पः॥३५॥

**सख्यः**—( **जनान्तिकमन्योऽन्यम्** ) अ[3]हतोह अदिभूमिं गदो ईमाए मणोदाओ ह किं कादव्वं। ( अहह.........अतिभूमिं गतोऽस्या मनोदाहो हा किं कर्तव्यम् ? )

**राधा**—( **समन्ताद्वृन्दावनसंपदमालोक्य सप्रथम्** ) हला वहिणिआओ ! सोत्थि भौदिहिं। कदाविअहं णो विसुमरिदव्वात्ति जाचे। (हला भगिन्यः ! स्वस्ति भवतीभ्यः। कदाप्यहं न विस्मर्तव्येति याचे )। ( **संस्कृतेन** )—

मदयतु मुदा माकन्दानां पिकं मुकुलावली
रमयतुतरां मल्ली[4]वल्लीमधुव्रतमादृता।
हरतु हरिणीनेत्राच्चित्तं हरेस्त्वहमर्थये
प्रतिजनुरिदं तस्यैव स्यां कदाचन किङ्करी॥ ३६॥

**( इति गङ्गासङ्गमोत्तुङ्गद्युति[5]सूरात्मजापयःपूरायमाणमामुक्तमुक्तालतं प्रियतमोरस्थलं ध्यायन्ती मूर्च्छति )**

---

१. मूले 'रुक्ष्यायते' इत्यशुद्धः पाठः।

२. क्रियावानिव = प्रयोजनवानिव। मूले तु 'क्रियावागिव' इति पाठः।

३. 'अहतो ह' इदं दुःखाविर्भाविऽव्ययम्।

४. 'दल्ली' इति मूलपुस्तकस्थः पाठः।

५. 'पूरात्मजा' इति मू० पु० अशुद्धः पाठः।

**सख्यः**—( **साक्रन्दं** ) हा सिणिद्धसीले हा सहीअनवत्थले[1] हा चन्दमुहि-राहिए कहिंसि कहिंसि ? ( हा स्निग्धशीले ! हा सखीजनवत्सले ! हा चन्द्रमुखि-राधिके ! क्वासि क्वासि ? )।

( **नेपथ्ये वंशीध्वनिः** )

**सर्वाः**—( **श्रुतिमभिनीय** )—

ग्रावाणं द्रवयन्[2] द्रवं कठिनयन् सस्पन्दमस्पन्दयन्
दावाग्निं हिमयन् हिमं दहनयन्नज्ञानयन् ज्ञानिनः।
पीयूषं विषयन्[3] विषं च सुधयन् निर्जीवितं जीवयन्
संजातः कुलजायशोद्रिकुलिशः[4] कोऽप्येष वंशीस्वनः ॥ ३७ ॥

**राधा**—( **संज्ञां लब्ध्वा** ) अम्हो केण लंविदजीविदम्हि। ( अहो केन लम्भितजीवितास्मि )। ( **इति परितो विलोकयति** )।

( **पुनर्नेपथ्ये** )

ज्ञातं ज्ञातमयि प्रिया मम बलत्पुण्यैः स्वयं[5] निर्मिता
नैतादृक् करणक्षमः पुनरसौ धाता पुनः कोपितः।
तेन क्रूरतरेण मर्मनिहता पुण्यैरियं जीव्यते
तस्याः संगममङ्गलं मम पुनर्भूयात् किमु प्राणनम् ॥ ३८ ॥

**सख्यः**—( **समाकर्ण्य सानन्दोत्साहपुलकप्रत्यभिज्ञम्** ) अम्हो तस्स जेव्व दुल्लहलोअस्स सरो सुणीअदि। ता सहि राहिए दिट्ठिआ वड्ढसि। एसो दे मणोमाणिक्कतक्करो जीविदसरसीरुहभक्करो तुमं उद्दिसिअ किंपि किंपि जंपदि। ( अहो तस्यैव दुर्लभदर्शनस्य स्वरः श्रूयते। तत् सखि राधिके ! दिष्ट्या वर्द्धसे। एष ते मनोमाणिक्यतस्करो जीवितसरसीरुहभास्करस्त्वामुद्दिश्य किमपि किमपि जल्पति )। ( **इति कर्णौ निधाय सोत्कण्ठं तिष्ठन्ति** )। ( **पुनर्नेपथ्ये** ) वअस्स कण्ह परित्ताहि परित्ताहि। ( वयस्य कृष्ण ! परित्रायस्व परित्रायस्व ) ( **पुनस्तत्रैव** ) सखे कथमेतादृशः संभ्रमः ?

**राधा**—सहीओ ! अवि अ अज्जभद्दमुहोवि। ( सख्यः ! अपि च आर्यभद्रमुखोऽपि )।

---

१. 'वलले' इति मू० पु० पाठः। २-३ मूले 'द्रवन्' 'विषन्' इति यकारश्च्युतः।
४. मूलपुस्तके 'कुलजायशः कुलिशतां' इति पाठोऽसंगतः।
५. 'स्वनिर्मिता' इति मूलपाठो न सम्यक्।

**सख्यः**—एवं णेदं ता सुणम्ह । ( एवं नु इदं तत् शृण्मः ) । **( पुनस्तत्रैव )** वअस्स कधं कधनिज्जं तहसिवि सुणेहि । ( वयस्य ! कथं कथनीयम्, तथापि शृणु ) ।

**सख्यः**—राहिए ! अवहिदा हुविअ सुणम्ह । (राधिके ! अवहिता भूत्वा शृण्मः ) **( पुनर्नेपथ्ये )** विसहाणुतणअं विसमज्जरसम्मलिदं विलोईअ ताए सौत्थितिवाअणकामणचित्तेहिं तत्सहीहिं चन्दनाअरकप्पूरकुंकुमतंबूल-पहुदि पुअओवअरणं गोहअ वणदेवदामंडवं यदि सा णीदा तत्थ कदावि अअं जरो अम्हेसुं उप्पदिअ संचरीदित्ति भोदो तुह णुअडं आअदो अम्हि । ( वृषभानुतनयां विषमज्वरसंपीडितां विलोक्य तस्याः स्वस्तिवाचनकामनाचित्ताभिः तत्सखी-भिश्चन्दनागरुकर्पूरकुङ्कुमताम्बूलप्रभृतिपूजोपकरणं गृहीत्वा वनदेवतामण्डपं यदि सा नीता, तत्र कदापि अयं ज्वरोऽस्मासूत्पत्य संचरेदिति भीतस्तव निकट-मागतोऽस्मि ) ।

**सख्यः**—**( समाकर्ण्य सस्मितम् )** राहिए ! पहसणमेत्तकम्मा एसो वह्मणो केवलं मिथ्या जप्पं कुणई । ( राधिके ! प्रहसनमात्रकर्मा एष ब्राह्मणः केवलं मिथ्याजल्पं करोति ) ।

**राधा**—सुणह्म दाव । ( शृण्मस्तावत् ) ।

**सख्यः**—ता एहि कुंजंतरिदा होम्ह । **( तदेहि कुञ्जान्तरिता भवेम )** **( इति कुञ्जान्तरे निलीय सर्वाः शृण्वन्ति )** ।

**( ततः प्रविशति सविदूषकः कृष्णः )**

**कृष्णः**—सखे भद्रमुख ! अलं प्रहसनेन; किन्त्ववधीयताम्—

साम्राज्यं मदनस्य वामनयनास्तत्रापि नव्याः परं
नव्यासु व्रजसुभ्रुवः स्मरकलालावण्यकेलीभुवः ।
तन्मध्येऽपि शिरीषसोदरतनुः प्राणाधिका राधिका
राधायां च मुखं मुखेऽपि किमपि स्निग्धस्मितालोकितम् ॥२९॥

**राधा**—**( स्वगतम् )** हिअअ समस्सस समस्सस । ( हृदय ! समाश्वसिहि समाश्वसिहि ) ।

**सख्यः**—**( सस्मितम् )** राहिए दाणिं कधं णिव्वेदणं कुणसि । ( राधिके इदानीं कथं निर्वेदनं करोषि ) ।

**राधा**—सुणम्ह ( शृण्मः ) ।

**कृष्णः**—सखे ! विचार्यताम्—

वर्णः स्वर्णद्युति[१]रधरवद्दीप्तयः पद्मरागा
दन्ता मुक्ताः स्मितलवलसत्कान्तयश्चन्द्रकान्ताः ।
नेत्रद्वन्द्वद्युतिरिह महानीलरत्नालिरेतत्
[२]पण्यस्थानं मदनवणिजो राधिकायाः किमङ्गम् ॥ ४० ॥

**राधा**—( **त्रपामभिनीय वदनमधोनयति** ) ।

**सख्यः**—( **सस्मितम्** ) सहि सच्चं ज्जेव एदं किंदु एदाए विवणीए एस्सो ज्जेव कण्हो गराहओ । ( सखि ! सत्यमेवेदम्; किन्तु अस्यापि वणिज एष एव कृष्णो ग्राहकः ) । ( **इति तथास्थिताः** ) ।

**भद्रमुखः**—( **सोल्लासम्** ) भो पिअवअस्स तं आणेमि त अंगसंगदानं सोण पहुदिआणं जइ किंपि मे देसि तदो तं भंजिअ खंडलड्डुअं किणेमि । ( भोः प्रियवयस्य ! तां आनयामि ते अङ्ग-सङ्गतानां स्वर्णपट्टादिकानां यदि किमपि मे ददासि, तदा तं भञ्जयित्वा खण्डलड्डुकं क्रीणामि ) ।

**कृष्णः**—साधूक्तम् ।

**सख्यः**—( **सस्मितम्** ) राहिए दाणिंजेव पमादो ता एहि तुमं ढक्कि-सरक्खं मम्ह । ( राधिके ! इदानीमेव प्रमादः । तदेहि त्वामाच्छाद्य रक्षयामः ) । ( **इति तां पृष्ठतः कृत्वा स्वयमग्रे तिष्ठन्ति** ) ।

**भद्रमुखः**—वअस्स ! ता एसोहं तधा करेमि । ( वयस्य ! तदेषोऽहं तथाकरोमि ) । ( **इति निष्क्रान्तः** ) ।

**कृष्णः**—( **परितो विलोक्य सोत्कण्ठम्** ) अहो राधायाः कोऽपि परिजनो ( **इत्यर्धोक्ते वाष्परुद्धकण्ठः** ) ( **स्वगतम्** ) नायातोऽद्यापि, तत् किं करोमि मन्द-भाग्यः । तदिहैव कुञ्जे क्षणमुपविश्य प्रतिपालयामि भद्रमुखागमनम् । ( **इति तदभि-मुखमुपसर्पति** ) ।

**चारुमती**—( **तथाविधं दृष्ट्वा** ) अम्हो अहं एदेण समालोकिदा । तेणज्जेव्व इध आअच्छदि । ता सअंजेव उपसप्पामि । ( अहो ! अहमेतेन समालोकिता । तेनैवात्र आगच्छति । तत्स्वयमेवोपसर्पामि । ( **इत्युपसर्पति** ) ।

---

१. मूल पुस्तके—"**वर्णस्वर्णान्यधरवद्दीप्तयः**" इति पाठस्त्रुटिपूर्णः ।

२. मू० पु० '**पुण्य**' इति लेखो न सम्यक्, '**मदनवणिजः**' इति स्वरास्यहानेः । पादत्रये उपमानतया पण्यद्रव्याणामेव वर्णनात्, मदनस्य वणिक्त्त्वेन रूपणात् ।

**कृष्णः**—( **अवलोक्य सोल्लासम्** ) चारुमते ! कुतोऽसि. कथय किं कथितव्यम्।

**चारुमती**—( **संस्कृतमाश्रित्य** )—

मृद्वीकामृदुलेयं ज्वलितानलसोदराः करास्तरणेः।
अस्यां मरुभुवि तस्या जलधरजीवातुरस्तु कस्त्वदृते ॥ ४१ ॥

**कृष्णः**—( **सावहित्थम्** )

शमयेत्तपनकरेभ्यस्तापं हरितां च संहरेत्तिमिरम्।
उदियात्सुधांशुलेखेत्येवं चित्तश्च[1]कोरकः श्वसिति ॥ ४२ ॥

**चारुमती**—मोहण किं बहुना प्पलविदेण, दाणिज्जेव जदू लोअणपथो णो होसि तदो सा ण पुणो दंसणीआ। ( मोहन ! किं बहुना प्रलपितेन, इदानीमेव यदि लोचनपथे न भवसि, तदा सा न पुनर्दर्शनीया )।

**कृष्णः**—( **सवैराग्यम्** ) चारुमते ! कथय क्वास्ते प्रियतमा ?

**चारुमती**—( **कुंजं दर्शयति** )।

**कृष्णः**—( **सानन्दं समीपमुपगम्य सावहित्थम्** ) चारुमते ! कथमिह भवतीभिः पुनः पुनरेवमेव मे वृन्दावनकुञ्जकुसुमान्यवचीयन्ते। ( **इति कुञ्जद्वारमवरुध्य** ) चारुमते ! एताः का अपराः।

**चारुमती**—( **सस्मितम्** ) पराज्जेव एदाओ। ( परा एवैताः )।

**राधा**—( **कृष्णमवलोक्य सानन्दपुलकस्तम्भस्वेदसचमत्कारप्रणयं स्वगतम्** ) अम्हो किं एसो सिविणो ? ( अहो किमेष स्वप्नः ? )।

**सख्यः**—( **जनान्तिकम्** ) सहिओ किं भोदु। पलाईदुंपि णो पारिदं, चारुमतीज्जेव चतुरा। (सख्यः किं भवतु, पलायितुमपि नो पारितम्, चारुमत्येव चतुरा )।

**कृष्णः**—चारुमते ! इयं खलु नयनाभिरामा किमिति क्षामा दृश्यते।

**चारुमती**—( **संस्कृतेन** ) त्वमतिरसायनतन्त्रपारदृश्वासि। तदस्मद्वयस्यायाश्चिररुग्णायाः सम्यङ्नैरुज्याय भैषज्यं विचार्यताम्।

**कृष्णः**—विचार्यते सुश्रुतानुसारेणैव। ( **इति सस्पृहं विलोकयन् निकटमुपसर्पति** )।

---

१. मूले 'श्च' इति त्रुटितः।

**राधा**—( **ससाध्वसानन्दाद्भुतवैलक्ष्यं तिर्यङ्निरीक्ष्य, स्वगतम्** ) हिअअ साहु साहु[1] सहिदं तुम एतादिसं पीडासहस्सं। ( हृदय साधु साधु सोढं त्वयैतादृशं पीडासहस्रम् )।

**चारुमती**—( **उभयोराकारं विदित्वा स्वगतम्** ) ( **संस्कृतेन**[2] )—

रहसि प्रथमसमागमरभसिनि राधामधुद्विषोः किमपि।
द्राघिमकुटिलिमतरलिममधुरिमगरिमाक्षिपद्भ्रूयोर्जयति ॥ ४३ ॥

( **जनान्तिकम्** ) राहिए सुणेहि मे उवदेसं। (राधिके शृणु म उपदेशम्) (**संस्कृतेन** )—

मन्दस्मितानन्दिदृगञ्चलाभ्यां मनोहरः सुन्दरि ! नन्दसूनुः।
मनोभवक्लेशविनाशनाय भुजालताभ्यां सखि बन्धनीयः॥ ४४॥

**राधा**—( **सभ्रूभङ्गम्** ) अय्युच्छुदालाषे किति अप्पणो अहिलसिदं परस्सिंआसजेसि सअंज्जेव तधा करीअदु। (अयि ! उत्सूत्रालापे ! किमित्यात्मनोऽभिलषितं परस्मिन्नासंजयसि ? स्वयमेव तथाकरोतु )।

**सख्यः**—( **सकपटक्रोधम्** ) हला अणिवित्तिकोव्वणे जयि निरवराहासु अम्हेसु अआरणंज्जेव कुप्पसि ता अम्हेहि इदो अणदो गंतव्वं। ( हला अनिमित्तकोपने यदि निरपराधास्व(प्य)स्मासु अकारणमेव कुप्यसि, तदस्माभिरितोऽन्यतो गन्तव्यम् )। ( **इति सव्याजं निष्क्रान्ताः** )।

**राधा**—( **व्याकुलतां नाटयति** )।

**कृष्णः**—( **तथाभूतामवलोक्य स्वगतम्** )

विधाय हास्यानि रहस्यदेशादस्माद् वयस्यासु विनिर्गतासु।
राधोपगूढा त्रपयैव गाढमेकाकितादोषभियेव सद्यः॥ ४५॥

तदस्याः साध्वसापाकरणाय यतनीयम्। ( **प्रकाशम्** ) सुन्दरि ! किमेवमीहसे ? अवधारय—

गन्तुं मदीयहृदयाद्दधते प्रमोदं प्राणास्त्वदीयविरहे भवती तु नैव।
त्वां मञ्जुवञ्जुलनिकुञ्जतले विलज्जा लज्जापि धित्सति कथं वद पङ्कजाक्षि ॥४६॥

---

१. मूले 'साहुहु' इत्येवं पाठः, तत्रान्त्यात्प्राक् 'सा' इति त्रुटितः।

२. मूले 'संस्कृतेन' इति नास्ति।

अपि च—

अङ्गीकृत्य कुरङ्गशावनयने मां चेदतो लज्जसे
तत्स्वाङ्गैः किमनङ्गमङ्गलतनो लज्जा न ते जायते।
यद्युन्मुक्तगुणः समुज्ज्वलगुणैरेतैरहं नादृतः
प्राप्तोन्मुक्तगुणा मया तदधुना नीवीकरालम्बनम् ॥ ४७ ॥

( इति चेलाञ्चलमाकर्षति )

**राधा—( सावहित्थम् )** हला सहिओ चिट्ठध चिट्ठध, किं एदस्सिं सगडे एआइणीं मं उज्झिअ गदाओ तुम्हे, ता किदनिक्किदंसि सोहस्स। ( हला सख्यः ! तिष्ठत तिष्ठत। किमेतस्मिन् संकटे एकाकिनीं मामुज्झित्वा गता यूयम्, तत् कृतनिष्कृतयः स्थ सख्यस्य )।

( इति बलादात्मानं मोचयन्ति )

**कृष्णः**—प्रिये मय्यपि सन्निहिते कथमेकाकिता भवत्याः ? आ ज्ञातम्, सत्यमेकाकिता भवत्याः। आ ज्ञातं सत्यमेकाकितैव, यन्मामभिन्नमेव प्रत्येषि। मम तु इत्थं विचारयतो निश्चयपदवीं नाधिरोहसि। यतः—

नाभिन्ना प्रणयक्रोधाद् भिन्ना नाभेदबुद्धितः।
भिन्नाभिन्नाविरोधान्न त्वं त्वमेवासि मे प्रिये ! ॥ ४८ ॥

( इति बलादङ्कमारोपयति )

**राधा—( सुधाह्लदनिमग्नेव मुदमभिनीय सविनयप्रणयस्मिताकुञ्चनमन्दाक्ष-मन्दाक्षरम् )** सुन्दर ! मं हसिदावलोईद किरणमेत्तरअणपरिकिणीदां किंकरीं कधं न परिचिणेसि )। ( सुन्दर ! मां हसितावलोकितकिरणमात्ररत्नपरिक्रीतां किङ्करीं कथं न परिचिनोषि ? )।

**कृष्णः— ( सप्रणयम् )** अयि प्राणेश्वरि ! कथं त्वमसि किङ्करी ? यतः—

दृशोश्चेत् सौभाग्यं सुखयसि कथं घ्राणरसने
तयोश्चैवं चेत् किं त्वचमपि मनोऽपि श्रुतिमपि।
समस्तानां तेषामपि भवसि चेत् किं प्रियतमे
न शाम्यत्यन्योन्यं त्वयि मम ममैवेति कलहः ॥ ४९ ॥

---

१. मूले 'प्राण' इति पाठः।

**अपि च—**

प्राणप्रतिमा भवतीति कथं ब्रूमः । यतः—

प्रेयसीं प्राणसदृशीमामनन्ति कुबुद्धयः ।
प्राणाः सर्वत्र सुलभाः प्रेयसी क्व भवादृशी ॥ ५० ॥

**राधा—( सचमत्कारप्रमोदम्, संस्कृतेन )—**

शल्यान्यपीह हृदये हरिचन्दनानि
हालाहलोऽप्यमृतमग्निशिखापि शीता ।
आकस्मिकं किमिति संप्रति नाद्य जातम्

**( इत्यर्धोक्ते सदीर्घनिश्वसितम् )**

हा धिक् पुरैतदखिलं विपरीतमेव ॥ ५१ ॥

**( इति क्लेशपरवशतां नाटयति )** ।

**कृष्णः—( सप्रणयानुनयम् )** अयि चन्द्रानने ! नाश्चर्यमिदं **किञ्चन ब्रवीषि—**

पूर्वं तुषारकिरणस्य कराः करालाः
काकोलतोऽपि मलयस्य समीरणश्च ।
हृत्कर्णचूर्णनपराः पिकवाग्विहारा-
श्चामीचमूरुनयनेऽद्य तु जीवितं नः ॥ ५२ ॥

**अपि च—**

सुतनु ! विनापि वचस्ते संगुप्तं नैव चेतसो वृत्तम् ।
विपिने विना प्रदीपं किं मृगनाभेर्न सौरभं व्यक्तम् ॥ ५३ ॥

**अपि च—**

वीक्षितेनैव केनापि हृदये प्रेम लक्ष्यते ।
अंशुकेनापि संछन्नं महारत्नमिवांशुना ॥ ५४ ॥

**( इति पुनरालिङ्गति )** ।

**( नेपथ्ये )**

भो भो गोप-गोवत्सवत्सलकृष्ण ! परित्रायस्व परित्रायस्व । **केनापि काल-कल्पेन** ज्वलनेन सकलमेव गोकुलं कवलीक्रियते । **( इति कलकलः )** ।

**कृष्णः—( समाकर्ण्य ससंभ्रमम् )** प्रायः पितृचरणानामयमार्तस्वरः । **( इति सत्वरमुत्थाय )** कुतोऽसौ कुतोऽसौ कुतोऽसौ ? **( इति निष्क्रान्तः )** ।

**राधा**—हद्धी हद्धी किं नेदं । ( हा धिक् हा धिक् किं न्विदम् ? )
( **संस्कृतेन** ) यदिह—

समुपचितपिपासाचातकीदीर्घकालं
प्रबलरविकरेणोत्तापितान्तर्बहिश्च ।
कथमपि जलबिन्दूनुत्सृत्याम्बुवाहे
हरि हरि खरवातो वज्रपातायतेऽस्याः ॥ ५५ ॥

ता अहं मंदभाआ किं करेमि । सहीमंडलमज्झंजेव गच्छेम्हि । ( तदहं मन्दभाग्या किं करोमि । सखीमण्डलमध्यमेव गच्छामि ) । ( **इति निष्क्रान्ताः सर्वाः** ) ।

**॥ इति सुस्निग्धमाधवो नाम तृतीयोऽङ्कः ॥ ३ ॥**

## ॥ अथ चतुर्थोऽङ्कः ॥

( ततः प्रविशति त्रिपुरदलनकमलासनसुनासीरसुरश्रेणी )

( पुरतोऽवलोक्य परस्परम ) अहो भाग्यम् । पश्यन्तु इहैव—

स्पृष्ट्वौष्ठेन दिविष्ठधिष्ण्यमधराकृष्टां महिष्ठां महीं
पिष्ट्वा [1]पृष्ठनिविष्टविष्टपतलं धृष्ट्वेह गोष्ठे स्थितम् ।
पापिष्ठं वहुशिष्टकष्टदमघं कंसस्य दुष्टात्मनोऽ-
भीष्टं हृष्टमना हठेन हतवान् दृष्ट्वैव दुष्टान्तकः ॥ १ ॥

अपि च—

[2]मत्क्रीडा प्रकटीकृतेह सकलक्लेशाम्वुधेर्मोचनी
किन्त्वन्ते द्विषतां परं प्रणयिनां जीवद्दशायामपि ।
इत्येवं प्रतिबोधयन् पशुशिशुस्तोमं विहारीहरि-
र्मृत्योर्मोचितवान् दितेस्तु तनयं देहादिकृद्वन्धनात् ॥ २ ॥

**ब्रह्मा**—अये त्रिनेत्रवृत्रदलनवीतिहोत्रादयः ! चित्रमिदमाकर्णयन्तु । दलिताघासुरो दामोदरो व्रजकुमारैः सह महामहितमतिललितं किमपि कुर्वन् पर्वतोपत्यकामध्यासीनः सुहृद्वचनदत्तकर्णोऽयमभ्यर्ण एव । तदेतद्वदनेन्दुस्यन्दमानवचनामृतसन्दोहैरतितुन्दिलमानन्दमाविन्दामः । ( इति सर्वे परिक्रामन्ति ) । ( नेपथ्ये ), सखे इत इतः । ( सर्वे श्रुतिमभिनयन्ति ) ।

**ब्रह्मा**—( नेपथ्याभिमुखमवलोक्य ) हंहो वत्साः ! सुदामा किञ्चिद्वक्ति । ( पुनर्नेपथ्ये ) प्रियवयस्य ! कोऽयमतीव पापीयान् विन्ध्यगन्धमादनादितोऽप्यतिमहान् भवद्भुजदण्डपिण्डीकृतः ?

**ब्रह्मा**—कृष्णः किं कथयति ? तदाकर्णयत । ( पुनस्तत्रैव ) असौ दुरात्मा अघासुरः कर्मानुरूपनामा पापीयसः कंसस्य समीहितकमात्रकरणधर्मा ।

---

१. 'पिष्ट' इति मूले ।    २. तथोक्तं भक्तिरसायने—

"राजसी-तामसीभक्तिरदृष्टफलमात्रभाक् ।
दृष्टादृष्टोभयफला मिश्रिता भक्तिरिष्यते" ।. इति २ ४५ ।

**रुद्रः**—( **समाकर्ण्य** ) समुचितैषा दशा दावानलरिङ्गिणां पतङ्गानाम् ।
( **नेपथ्ये** ) ही ही संपदंज्जेव उअरफंदणफलं कवलं उबलहीयदि । ( ही ही साम्प्रतमेव उदरस्पन्दनफलं कवलमुपलभ्यते ) ।

**देवाः**—( **समाकर्ण्यान्योन्यम्** ) किमित्याकस्मिकं भद्रमुखः प्रलपति ।

**ब्रह्मा**—श्रूयताम् सुदामा यद् वदति । ( **पुनस्तत्रैव** ) प्रियसखे कृष्ण ! मनाक् समाहितमनाः समाकलय । अशनसमयोऽयमतिक्रामति । जननीचरण-प्रहितमिदमिदानीमुपभुज्यताम् ।

**ब्रह्मा**—हंहो वत्साः कौतुकमिदमवलोकनीयमेव । ( **इति सावधानास्तिष्ठन्ति** ) । ( **पुनर्नेपथ्ये** ) वयस्याः ! किं प्रस्थापितं मातृचरणैरानयत । वयस्य ! इदमिदम् । अम्हो गोपडिभा कित्ति तुम्हाणं पमोदो णिण्णिमित्तं व्वछइ । यदो "यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ" । एदं खु धम्मसात्तं जदिणो बम्हचारिणोवि सामित्तणं वोधेदि । जदी उण एत्थणत्थि[1] । तदो मएज्जेव्व ब्रह्मचारिणा एदं सव्वं भुंजिदव्वं । ( अहो ! गोपडिम्भाः किमिति युष्माकं प्रमोदो निर्निमित्तं वर्द्धते ? यतो "यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ" । इदं खलु धर्मशास्त्रं यतेर्ब्रह्मचारिणोऽपि स्वामित्वं बोधयति । यतिः पुनरत्र नास्ति । ततो मया एव ब्रह्मचारिणा एतत्सर्वं भोक्तव्यम् ) सखे भद्रमुख ! सम्यग् ब्रवीषि, यद् भवतो भोजनमेव सिद्धिकरं प्रथमं स्मृतितः प्रतीयते । तथा हि—

अनड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः ।
अश्नन्त एव सिद्ध्यन्ति नैषां सिद्धिरनश्नताम् ॥ ३ ॥

**ब्रह्मादयः**—( **समाकर्ण्य सहासमन्योन्यम्** ) साधूत्तरितं सुदाम्ना ! ( **निरूप्य सकौतुकम्** ) पश्यत पश्यत ! द्रोणकुसुमसमतानुमोदनान्योदनानि, परिणतसुधाकरसहोदराः साधुसाधितविविधगोधूमविकाराः, तिरस्कृतस्फुरत्तुषारकिरणमसृणघनसाराः शर्करासाराः, दुग्धजलधिजम्बालजालसमुल्लासलङ्घनजङ्घालतालालसानि पायसानि, द्राक्षामाक्षिकपीयूषयूषगञ्जनानि व्यञ्जनानि, प्रथमतरुणिममदविदग्धमदनागमविदग्धमुग्धवधूचरितस्निग्धानि दधिघृतदुग्धानि, प्राणभृन्मात्रवितृष्णाभ्रंशान्युपदंशानि । किं बहुना, सकलमेवैतत् सुधामाधुरीमधरीकरोति । यतः शाकोऽपि नाकोपभोग्यमभिभवति । तदधुना वयस्यैः सह यावदमी प्रभुचरणा अभ्यवहरन्ति, तावदेव वयमेनमुपश्लोकयामः पुण्यश्लोकम् । ( **इति निष्क्रान्ताः** ) ।

---

१. 'एच्छणच्छि' इति मूले ।

( ततः प्रविशति सहचरैः सह कृतभोजनः श्रीकृष्णः )

**श्रीकृष्णः**—( सप्रमोदम् ) वयस्याः ! अद्य परमानन्दतुन्दिलैरेवास्माभिरभ्यवहृतम् ।

**सखायः**—एवमेव किं कथनीयम् । प्रथमतो मिष्टान्नपानानि । तत्र च वत्सलैर्मातृचरणैः प्रेषितानि । तत्र भवता साकमुपयोगः, इत्यस्माकं तु विशेष एव आनन्दस्य । अपि च—

किं वा सुरसंभजतामेतत्ताम्बूलसौभाग्यम् ।
किं [1]वा जगति विचित्रं व्रजति तुलांते चरित्रस्य ॥ ४ ॥

**सुदामा**—( पुरतोऽवलोक्य सकौतुकम् ) वयस्य ! पश्य पश्य—

सानन्दं यमुनातटे विटपिनां मूले वयस्यैः समं
दध्यन्नान्युपभुज्य रज्यति पुनस्तत्क्रीडनेषु त्वयि ।
देवेन्द्रस्त्रिपुरान्तकः कमलभूरन्ये च नाकालयाः
काकाकारजुषो मुदा कवलयन्त्युच्छिष्टमिष्टं तव ॥ ५ ॥

**श्रीदामा**—( पुरोऽवलोक्य ) वयस्य ! पश्य पश्य—

करिकरभुजकाण्डः पुण्डरीकाक्षिलक्ष्मीः
स्मितविकसितगण्डं मण्डयन् कुण्डलेन ।
उपहसति क एतेनाम्बराभाम्बरेण
स्फटिकगिरिनितम्बा लम्बिनं वारिवाहम् ॥ ६ ॥

**कृष्णः**—सखे !

दितिजकुलकृतान्तश्चन्द्रकान्तातिकान्तः
स्वजनगणनितान्तस्वान्तसन्तापनान्तः ।
व्रजनगरनिकामप्रापिताशेषकामः
प्रतिपदमभिरामः सोऽयमभ्येति रामः ॥ ७ ॥

( इति ससंभ्रममुत्थानं नाटयति )

( प्रविश्य )

**बलरामः**—वत्स ! कुशलमनाकुलं प्रागेवाकलितं[2] निखिलगोकुलबालकानां दावाग्निकवलितानां भवत्प्रभावादेव ।

---

१. मूले तु 'वां' इति त्रुटितम् ।
२. 'कुलितं' इति मूले पाठो न संगतः ।

**कृष्णः** –( **सविनयं पदरजः परिगृह्य** ) आर्य ! श्रीमत्पदकमलोपासना-लालसासंवलितचेतसामुचितमेवैतत् ।

**बलरामः**—किमाश्चर्यम् । जगदुदयव्ययसंरक्षणनिदानस्य त्रिगुणमाया-दारुपुत्रिकानर्तकस्य भवतः । अपि च—

सृष्ट्यादौ प्रकृतिर्गुणत्रयमयी या स्वीकृतासीत्त्वया
सेयं सत्त्वमयी सुखाय जगतां हाराकृतिस्ते हृदि ।
गुञ्जादाममिषान्मुकुन्ददधती कण्ठे रजोविग्रहं
नाभीसीम्नि तमोमयी पुनरियं रोमावली राजते ॥ ८ ॥

**कृष्णः**—( **सविनयम्** ) आर्य ! चतुराननादिचातुरीसंचयनचरण-परिचरणस्य भवतः खलु वचनवैचित्र्यमिदं न सचेतसां चेतश्चमत्काराय । यतः—

भगवन् कवितासरोजिनीसविताऽत्त्वं भविता किमद्भुतम् ।
कवयस्तव यत्पदाम्बुजं कविपूर्वा हृदि संविदे दधुः ॥ ९ ॥

**बलरामः**—वत्स ! भवानेव कवितानवतामरसाटवी सविता । यतः सकलालङ्कारात्त्वदुक्ता वाचोयुक्तिः । मद्वचसि पुनः सहजाख्यानमेवालङ्कारः । यतः शतधानुभूतं विबुधादिषु प्रभुत्त्वं भवतः—

निद्राणे त्वयि शीतले तरुतले तल्पे दलैः कल्पिते
संवीज्याम्वुजपत्रमन्दमरुता संवाहिते पादयोः ।
रुद्र-ब्रह्म-महेन्द्रवर्जनविधौ गोपार्भकाणां कर-
व्याधूतानि जयन्ति भङ्गिमजुषोः शोणादृशोश्च त्विषः ॥ १० ॥

**कृष्णः**—( **लज्जानम्रमुखस्तूष्णीं स्थितः**[१] ) ।

**श्रीदामा**—अये कृष्ण प्रियसख ! प्रायशः समतिक्रान्तोऽयं वसन्तसमयः । यदिह—

निदाघेनाघूर्णन् हिमगिरिसमीपं दिनकरः
प्रयाति स्वस्थानादटति न पटीराद्रिपवनः ।
विसृज्य प्राखर्यं स्मरनरपतिश्चैव रमते
सरित्तीरेऽरण्ये क्षितिधरगुहायां तलगृहे ॥ ११ ॥

१. 'स्थितः' इति नास्ति मूलपुस्तके ।

**कृष्णः**—सखे ! स्फुटं निरटङ्कि । यतः—

कल्पान्तानलतिद्युतिर्दिनमणेः पन्था विषव्रातति
क्षोणी भर्जनपात्रति द्रुमलतास्तोमस्तथाङ्गारति ।
क्वाथत्यम्बु समस्तमेव सदनं चापाकति प्राणभृ-
न्मात्रं दीप्तदवाग्निगीर्णहरिणत्यद्येह मध्येदिनम् ॥ १२ ॥

**सखायः**—( **सोल्लासं** ) सखे कृष्ण ! इतोऽविदूर एव विलसत्तालफलान्या-लोक्य संवलितलालसाः संवृत्ताः स्मः ।

**कृष्णः**—( **सानन्दम्** ) अये वयस्याः ! इदमेवार्यचरणा विज्ञापनीयाः । किमाज्ञापयन्ति ।

**सखायः**—( **सत्वरं बलमुपगम्य सविनयम्** ) क्षणमवधेहि !

श्यामैर्मनोरमैस्तालैस्तिमिरैरिव मेदुरैः ।
व्योमभूमीतलं व्याप्तं लिप्तं पङ्कैरिवाभवत् ॥ १३ ॥

**अपि च**—

प्रोल्लसद्वहलतालसंकुलं मञ्जुलं जयति काननस्थलम् ।
इन्द्रनीलमणिबद्धभूतलं यद्वदूर्ध्वमुदिताभ्रमण्डलम् ॥ १४ ॥

**बलः**—अये ज्ञायतां कृष्णस्य कीदृशः स्वरसः ?

**सखायः**—सखे ! ज्ञायत एव यथाभिमतं श्रीमताम् ।

**बलः**—( **सकौतुकम्** ) त्वर्यतां तर्हि गमनाय । ( इति ) सर्वे ( **परिक्रम्य विलोक्य च** ) इदमिदं तत्तालवनं तावत्प्रविशामः । ( **इति प्रवेशं नाटयित्वा सोल्ला-समन्योन्यम्**) सखे ! इत इतः ! भो भोः ! इत इतः ! ( **इति पतितानि तालफलान्यु-द्दिश्य धावन्ति** ) ।

( **नेपथ्ये उच्चैर्भीषणस्वनः** )

**सर्वे**—( **ससंभ्रमम्** ) भोः कृष्ण ! भो राम ! परित्रायस्व ।

राम: कृष्णश्च—हंहो वयस्याः ! कथमकाण्डे भयं ताण्डवयथ ।

**सर्वे**—( **निपुणं निभाल्य सत्रासम्** ) सखे ! किं न पश्यसि । त्रैलोक्यत्रास-कारिरासभाकारमहान्धकारानुकारिवपुर्महासुरः कश्चित्-पश्चात्तनाभ्यां[1] पद्भ्यां जगदण्डं खण्डयन्निव घोरारावः सचराचरं विश्वमिवात्तुं व्यात्ताननोऽभ्येति ।

---

१. 'पश्चात्तालाभ्यां' इति मू० पु० पाठोऽसंगतः ।

**बलः**—( **विहस्य** ) सखायः ! सुखेन भवन्तस्तालफलान्युपभुञ्जताम् । पश्यत अहमचिरादेवैनं निहत्य समागच्छामि । ( **इति साटोपं निष्क्रान्तः** ) ।

**कृष्णः**—वयस्याः ! पश्यत पश्यत समागतप्राया आर्यचरणाः । (**नेपथ्ये**) अलमतित्रासेन । सुस्था भवन्तु भवन्तः ।

तालाङ्कस्तालजालाकुलितवनभुवं संगतो गोपबालैः
साद्धं नक्षत्रजालैरिव गगनतलं पार्वणः शर्वरीशः ।
क्रुद्धो युद्धोद्धुरस्तं त्वरितमनुसृतो ध्वान्तवद्धेनुको यः
सोऽयं सद्यः सबन्धुः शममुपगमितस्तेन नीलाम्बरेण ॥ १५ ॥

**कृष्णः**—( **श्रुत्वा** ) अये वयस्याः ! सिद्धं वः समीहितम्, यदमी विमानचारिणः प्रस्तुवन्ति । ( **इति सश्लाघमालोकयति**[1] ) । ( **पुनर्नेपथ्ये** ) तिष्ठ रे दुरात्मन्नसुरापसद तिष्ठ तिष्ठ ।

**कृष्णः**—( **समाकर्ण्य ससंभ्रमम्** ) हंहो किमिदमप्रस्तुतं वचनमार्यस्य ? तन्निरूपयन्तु भवन्तः ।

**सर्वे**—( **निरूप्य** ) हन्त भोः ! कष्टमेतत् । सखे ! केनापि दुरात्मना गोपार्भकरूपिणा दनुजेन ह्रियतेऽयं रौहिणेयः ।

**कृष्णः**—( **ससंभ्रममालोक्य सकौतुकम्** ) पश्यत पश्यत—

मरकतमणिशैलः किं प्रलम्बः प्रलम्बः
किमुपरि बलदेवः शारदो वारिवाहः ।
स्फुरति किमयमुच्चैः स्फूर्जथुर्मुष्टिघातः
किमिह रुधिरधाराधोरणी गैरिकाणाम् ॥ १६ ॥

तदागच्छत वयमपि समीपमुपसृत्य आर्यचरणानां शौर्यसौन्दर्यमाकलयामः । ( **इति निष्क्रान्ताः** ) ।

**( ततः प्रविशन्ति मदनमोदिनीप्रभृतयः सहचर्यः )**

( **परस्परम्** ) हला सहीओ तुरिअं आअच्छध । माहवेन पल्लविदं फलवंदी राहिआए सोहग्गलदं पेक्खम्म । ( हला सख्यः ! त्वरितमागच्छथ । माधवेन पल्लवितां फलवतीं राधिकायाः सौभाग्यलतां पश्यामः) । ( **इति द्वित्रीणि पदानि गच्छन्ति** ) ।

---

[1] श्लाघ्यमिति तु मूले ।

**मदनमोदिनी**—चारुमदि ! राहामाहवाणं पठमसमागमम्मि किं होपि विवेचिअ कधेहि । ( चारुमति ! राधामाधवयोः प्रथमसमागमे किमभूद्विविच्य कथय ) ।

**चारुमती**—सहिओ सुणेधा । ( सख्यः शृणुत ) ( **संस्कृतेन** )—

कुसुमशरविलासारम्भसंभावनाया
स्मितललितकपोलं स्पन्दिनं नन्दसूनोः ।
मृदुलकरतलेन प्रोन्मृजत्येव राधा
जयति पुलकिताऽस्मिन् स्विद्यमाने नितान्तम् ॥ १७ ॥

**सख्यः**—तदो तदो । ( ततस्ततः ) ।

**चारुमती**—

हारे कुरङ्गनयने विलसति शितिमानमादधत्किमिदम् ।
इति करमुरोजशिखरेऽर्प्पयति हसन् नन्दनन्दनः सुतनोः ॥ १८ ॥

**सख्यः**—तदो तदो । ( ततस्ततः ) ।

**चारुमती**—त्वं पद्मिनीति विदितम्—

सुतनु ! तवास्याब्जसौरभं कीदृक ।
इति मुखसंमुखवदने नन्दतनूजे नतानना राधा ॥ १९ ॥

**सख्यः**—तदो तदो । ( ततस्ततः ) ।

**चारुमती**—गुणिनि !

गुणैस्तव बद्धः क इह महार्घो मणिः स्तनाधस्तात् ।
मुञ्चति विहसन् बलानुजो नीवीम् ॥ २० ॥

**सख्यः**—तदो तदो । ( ततस्ततः ) ।

**चारुमती**—

कम्पतः करयुगे प्रतिरुद्धे सुस्मितेन वचने च मृगाक्ष्याः ।
कर्षति प्रियतमेऽम्बरमक्ष्णोर्ह्री हरं जयति मुद्रणमेव ॥ २१ ॥

**अपि च**—

मत्तश्चुम्बति बिम्बं मधुपो बन्धूकसंबद्धम् ।
लसति च हेमाचलयोर्बालसुधांशोः कलाशतं परितः ॥ २२ ॥

**सख्यः**—तदो तदो। ( ततस्ततः )।

**चारुमती**—

मधुमधुरं किल जगति द्राक्षासाक्षात्सुधैवासौ।
अमृतं किमपरममृतं किन्तु कुरङ्गीदृशोऽधः कोऽपि ॥ २३ ॥

( इत्यास्वादयति )

**अपि च**—

चन्द्रश्चकोरतरुणेन तडिद्घनेन चाम्पेयदामयुगलं करिपुष्करराभ्याम्।
पद्मे च पद्मयुगलेन सुवर्णरम्भे स्तम्भद्वयेन पुरुहूतमणेः स्फुरन्ति ॥ २४ ॥

**अपि च**—

नृत्यति नवीनजलदः स्फुरति च तरला बलाकेयम्।
स्विद्यति सुधांशुविम्बं ताम्यति विद्युत् स्थिरा तदधः ॥ २५ ॥

**सख्यः**—तदो तदो। ( ततस्ततः )।

**चारुमती**—

गङ्गा तुङ्गा न वहति रुचिं मेरुशृङ्गच्युतेयं
भृङ्गीभङ्गीस्फुरणविकला नीलपङ्केरुहश्रीः।
मुक्तं बन्धादुपचिततमः क्लान्तमिन्दोश्च विम्बं
किं वा भूयात्पुनरिह यतो निश्चला चञ्चलापि ॥ २६ ॥

**सख्यः**—चारुमदि एहि हिं तंज्जेव अनुसरेम। ( चारुमति एहि वयं तामेवानुसरेम )। ( **इति परिक्रामन्त्यो नेपथ्याभिमुखमवलोक्य** ) अम्हो कधं एआइणी पियसही तम्मइ। ( अहो कथमेकाकिनी प्रियसखी ताम्यति )। (**इत्युपसर्पन्ति**)।

( **ततः प्रविशति यथानिर्दिष्टा राधा** )

**राधा**—कधं इधज्जेव सहीओ ता संवुत्तं हिअअ संतावुग्गार पत्तंति। ( कथमत्रैव सख्यः तत्साम्प्रतं हृदयसंतापोद्गारा उत्पतन्ति )। ( **इत्युपसर्पति** )।

**सख्यः**—( **सवैमनस्यम्** ) हला राहे कधेहि कधं एआइणीसि। (हला राधे कथय कथमेकाकिन्यसि )।

**राधा**—हला सहीओ सुणेध। ( **हला सख्यः शृणुत** )।

णिद्दामुद्दिअणेत्तं अचिरादो सव अणिद्य वैरादो।
हरिहरि मम हृदिआए हरिदवदी जीविंद खु हिअआदो ॥ २७ ॥
( निद्रामुद्रितनेत्रम् अचिरात् सापत्न्यवैरात्।
हरिहरि मम हृतिकाया हरितवती जीवितं खलु हृदयात्) ॥२७॥

( नेपथ्ये )

**सख्य**.—( चिरं विचारयन्ति )। अहो अतिनिभालयाम्यस्य कालस्य शोभाम्।

कृष्णघनालिङ्गनतश्चपलाचन्द्रावली रुचिरा।
निकषोपलसंमिलिता हेम्नो लेखेव लक्ष्यते यत्र ॥ २८ ॥

**सख्यः**—( **समाकर्ण्य अन्योन्यम्** ) किं एसा वनदेवदा जंपई। ( किमेषा वनदेवता जल्पति ) ( **इति अनिश्चयाभ्यसूयम्** ) हद्धी हद्धी। हला राहिए! धिघणं चंदाअली सहचरीणंज्जेव दुव्विलसिदं एदं जदो तुज्ज समक्खं ज्जेव गदुअ परंकरेम्ह। (हा धिक् हा धिक्! हला राधिके! धृष्टानां चन्द्रावलीसहचरीणामेव दुर्विलसितमिदं यतस्तव समक्षमेव गत्वा पराकुर्मः )। ( **इति परिक्रामन्ति** )।

( **ततः प्रविशति चन्द्रावल्या सह संकथयन् कृष्णः** )

**कृष्णः**—प्रिये चन्द्रावलि! समाकलय तावद्वर्षाकालस्य सुषमाम्।

मृगमदमसृणा श्रीरम्बरान्तेऽम्बुदानां
क्षणरुचिरुचिरुच्चैस्तत्र काश्मीरगौरी।
दिशि विदिशि कदम्बामोदिभिर्गन्धवाहै-
र्मदमुदितमयूरास्ताण्डवं मण्डयन्ति ॥ २९ ॥

**अपि च**—

एते गर्जितबृंहिताः शतह्लदा[1] जाम्बूनदालङ्कृताः
विस्फूर्जद्बिसकण्ठिकालिदशना देवेन्द्रचापाङ्कुशाः।
धारादानपरम्परा जलधरा युद्धोद्धुराः सिन्धुराः
कन्दर्पस्य महीभुजः करतले कुर्वन्ति सर्वं जगत् ॥ ३० ॥

**चन्द्रावली**—अज्जउत्त एत्थ जलअसमये मह एदं पडिहादि। ( आर्यपुत्र अत्र जलदसमये ममैतत्प्रतिभाति )।

---

१. प्रेह्ले वा इति गुरुत्वविकल्पान्न च्छन्दोभङ्गः।

( संस्कृतेन )

इन्दुर्नो वदनेन विन्दति तुलां हारेण तारावली
व्योमस्फारतरोरसा स्थिररुचा श्रीकौस्तुभेनांशुमान् ।
इत्येतत्सकलं तव द्युतिमता शम्पालि संपद्भृता-
जीमूतप्रकरेण पीतवसनस्यायं[1] पिधत्ते विधिः ॥ ३१ ॥

**राधा**—( **दूरादाकलय्य सेर्ष्यम्** ) हला पेक्ख पेक्ख । अच्चरिअं खु एदं जं चन्दावलीए रुईग्गहग्गत्थो सामजलओ । ( हला ! पश्य पश्य आश्चर्यं खल्विदं यच्चन्द्रावल्या रुचिग्रहग्रस्तः श्यामजलदः ) ।

**सख्यः**—हला राहिए ! एहि कुंजदरिदो हुविअ सुणम्ह । किं खु जंपइ । ( हला राधिके ! एहि, कुञ्जान्तरिता भूत्वा शृणमः । किं खलु जल्पति ) । ( **इति तथास्थिताः** ) ।

**कृष्णः**—कान्ते ! कविताकुमुद्वतीचन्द्रावल्येवासि, किन्तु किमेतदतिचित्रं तत्कथय ।

नेन्दुः सुन्दरि नन्दतु प्रतिपदं वक्त्रं तव द्योतते
नाम्भोजानि विभान्तु लोचनयुगं लीलायते सर्वतः ।
मास्तां कोकिलकाकलीकलपदं वाणी समुज्जृम्भते
विद्युद्वल्लिरियं कथं नु[2] वलते विभ्राजते यत्तनुः ॥ ३२ ॥

**चन्द्रावली**—( **सप्रमोदवैलक्ष्यावहित्थम्, अन्यतोऽवलोक्य** ) पेक्ख पेक्ख । ( पश्य पश्य )—

( संस्कृतेन )

कुसुमितलतिकापुञ्जाः गुञ्जन्मधुव्रतव्राताः ।
पटकुटिकाभटमुखराः सुन्दरकन्दर्पभूभुजः किमिह ॥ ३३ ॥

**चारुमती**—हला राहिए ! सुदं इमाए धिट्ठत्तणं । जं वअणभंगीए एण कुंजतरं णेदुं अहिलसदि । ( हला राधिके ! श्रुतमस्या धूर्तत्वम् । यद्वचनभङ्ग्या एनं कुञ्जान्तरं नेतुमभिलषति ) ।

**राधा**—सुणम्ह दाव । ( शृणमस्तावत् ) ।

---

१. मूले 'पीनवसनस्याय:' इति पाठोऽसंगतार्थः ।
२. 'न' इति मूलेऽसगतार्थः ।

**कृष्णः**—प्रिये ! पश्य पश्य—

वातोऽयं ककुभकदम्बजातियूथी माध्वीकद्रविनिकुरम्बपानमत्तः ।
उद्गच्छन् क्वचन पतन् भ्रमन्नमन्दं दिग्वालां विपुलपयोधरां धिनोति ॥३४॥

तदिदानीं जलदविलासविशेषादासन्नानुदकविन्दूनाकलयामः । तद् यावदमीभिः सुललितपत्रावली न क्षाल्यते भवत्यास्तावदेवाविरलपत्रालीवलितं लतागृहं प्रविशामः । ( **इत्युभौ तथा कुरुतः** ) ।

**राधा**—( **सखेदा[1]भ्यसूयं संस्कृतेन** ) सख्यः—

प्रियजननर्मदिदृक्षा हन्त विधातस्तदीक्ष्यते शत्रोः ।
अमृतं पातुमभीप्सा निपतति गरलं रसज्ञायाम् ॥ ३५ ॥

**सख्यः**—हला राहिए ! एहि घरंज्येव गच्छम्ह । किं एदिणा शवण ण[2] अणशल्लवेअणअणुहयेण । ( हला राधिके ! एहि गृहमेव गच्छाम । किमेतेन श्रवणनयनशल्यवेदनानुभवेन ) ।

**राधा**—मा उत्तम्ह मा उत्तम्ह । सुणम्ह किमयं भणदि । ( मोत्ताम्यामः मोत्ताम्यामः, शृण्मः किमयं भणति ) ( **इति तथास्थिताः** ) ।

**चन्द्रावली**—सुन्दर ! पेक्खं पेक्खं । ( सुन्दर ! प्रेक्ष्यम् प्रेक्ष्यम् ) ।

( **संस्कृतेन** )

कलयन्नलघुः कदम्बधूलीर्वलयन्नेष कलापिनां कलापान् ।
सजलाम्बुधरोल्लसद्विलासस्तुलयंस्त्वां मलयानिलः समेति ॥ ३६ ॥

**कृष्णः**—प्रियतमे ! सम्यगेव सत्वरमत्रागमनमावयोः । तथा हि—

व्योमव्याप्तमिदं पयोदपटलैर्दिङ्मण्डलं विद्युतां
द्योतैः स्फूर्जथुभिस्तथान्धतमसैस्त्रैलोक्यलक्ष्मीगृहम् ।
उच्चं नीचमिति प्रतीतिविषयो नैव क्षमामण्डले
किं मध्यं किमधः किमूर्द्धवमभितः संभार एवाम्भसाम् ॥ ३७ ॥

**अपि च**—

श्रोत्राभ्यां मुदिराम्भसः परमसौ सेव्योऽतिभव्यो ध्वनि-
र्नेत्राभ्यां निविडान्धकारपटलान्यापश्च विद्युद्द्युतौ ।
घ्राणाभ्यां च रसज्ञयाप्यनुपदं त्वग्भिश्च चित्तेन च
प्रायः प्राणसमैव भोग्यमखिलं वर्षास्विह प्राणिनाम् ॥ ३८ ॥

---

१. मूले–सख्यः, इत्यनन्तरं 'सखेदाभ्यसूयम्' इति व्युत्क्रमः । २. मूले 'ण' नास्ति ।

**अपि च—**

उल्लसति मौक्तिकालीकङ्कणमालाम्बरोल्लसत्कान्तिः ।
शीतलमधुरस्निग्धस्वच्छप्रकृतिप्रियाधिकं राधा ॥ ३९ ॥

**चन्द्रावली—( सेर्ष्या[1]स्मितम् )** अज्जउत्त सुणेहि । ( आर्यपुत्र ! शृणु ) **( संस्कृतेन )—**

धिग्जन्म प्रमदासु तास्वपि कलाकेलीषु धिक् कौशलं
धिक् तस्मिन् मदनस्य दुर्विलसितं धिक् प्रेम तस्मिन्नपि ।
धिक् तत्रापि विधेश्चरित्रमधिकं यत्कर्णयोर्निर्मितिः
स्वस्ति स्वस्ति निरस्तदूषणविभो तुभ्यं वचोभ्यश्च ते ॥४०॥

**कृष्णः—**प्रिये ! किमलीकदोषासज्जनेन मां विकलयसि ?

**चन्द्रावली—**भवदो चेदो अणुसारिणा व्वअणेण पविद्दिदं मे षवनपुडं ता पुणो भण पुणो भण । ( भवतश्चेतोऽनुसारिणा वचनेन पवित्रितं मे श्रवणपुटम्, तत्पुनर्भण पुनर्भण ) ।

**कृष्णः—( ससंभ्रमपरामर्शम् )** प्रिये ज्ञातं ज्ञातम्, प्रायो धारेत्युक्ते राधेति प्रत्याकलितं भवत्या ।

**सख्यः—**हला राहिए ! प्रेक्ख पेक्ख । तुह णामस्सवि सवणेण एसा रोसावेसं पआसेदि नामच्छरेहि । चंदावलि ! चिट्ठ चिट्ठ । ( हला राधिके ! पश्य पश्य । तव नाम्नोऽपि श्रवणेन एषा रोषावेशं प्रकाशयति नामाक्षरैः । चन्द्रावलि ! तिष्ठ तिष्ठ ) ।

**चन्द्रावली—( सताम्राधरकम्पम् )** अयि राहाणुराअपरवस ! तं ज्जेव अणुसरदु भवं । अहं खु णिअभअणंज्जेव अणुसरामि । ( अयि राधानुरागपरवश ! तामेवानुसरतु भवान्, अहं खलु निजभवनमेवानुसरामि ) । **( इति गमनं नाटयति )** ।

**कृष्णः—( उपसृत्य चेलाञ्चलमालम्ब्य )** अयि ! अकाण्डकोपताण्डविते ! श्रूयताम्—

दासो यद्यपराधभूर्विधिवशात्तत्रानुयोज्योविधि-
र्यो दण्डेन निहन्ति स प्रभवतां दण्ड्यो न दण्डः[2] क्वचित् ।
इत्यालोच्य विधेहि सुन्दरि दयां यन्नापराधो मयि
क्रोधश्चेन्न तथापि शाम्यति पदाघातान् कुरु स्वेच्छया ॥ ४१ ॥

---

१. 'सेर्ष्यस्मितम्' इति मूले । २. 'दण्डचः' इति मूलपुस्तकपाठो विचार्यः ।

अपि च, आस्तां वा मय्यप्रशस्तवचसासञ्जितो दोषलेपः। तथापि लोकवृत्तान्तं तावदाकलयतु भवती। तथाहि—

कलानाथः कामं व्रजति बहुदोषाङ्कितरुचं
कुमुद्वत्यास्तस्मिन्नपि भवति किन्नाम न रुचिः।
न पद्मिन्यामोदः किमु समुदयिन्युष्ण महसि
प्रिये प्रौढप्रेमा न गणयति दोषान् प्रणयिनः॥ ४२॥

( इति पादयोः प्रणमति )

**चन्द्रावली**—( ससंभ्रमं कराभ्यां समुत्थाप्य स्वगतम् ) असंदेहंज्जेव मे चित्तवामोहादो अण्णधाकण्णनं। होदु वा गोत्तक्खलनं तहवि नास्स दूसणं। जदो। ( असंदिग्धमेव मे चित्तव्यामोहादन्यथाकर्णनम्। भवतु वा गोत्रस्खलनं तथापि नास्य दूषणम्। यतः ( संस्कृतेन )—

क्वचिदपि माधविकायाः क्वचन लवङ्ग्याः क्व चापि पद्मिन्याः।
मधुनि मधुव्रतयूनः प्रणयो न नयात्कथञ्चन च्यवते॥ ४३॥

**कृष्णः**—( सप्रमोदं बाहुभ्यामङ्कमानीय गाढमालिङ्ग्य ) अयि वरवर्णिनि! समाकर्णय—

वीणा गीर्भिः श्रवणपुटयोर्नेत्रयोश्चित्रशोभा
कर्पूराली वपुषि रसने कापि पीयूषराधा।
कान्ते चिन्तामणिरसि करे वैजयन्ती च कण्ठे
कुण्ठोऽहं त्वन्महिमकथने कुत्र किं वा न मेऽसि॥ ४४॥

**अपि च**—

न राधिकामोदवहा वनस्थली हिता हि चन्द्रावलितावकी स्थितिः।
न तारकालीललिता विभावरी दिवः श्रिये किन्त्विह चन्द्रचन्द्रिका॥४५॥

**राधासखी**—एव्वं णेदं। राहिआ मोदवहव्व दे। ता पुणो भण पुणो भण। ( एवं नेदम्। राधिका मोदवहैव ते। तत्पुनर्भण पुनर्भण )।

**कृष्णः**—( आरात् श्रुतिमभिनीय सशङ्कमात्मगतम् ) प्रायः प्रेयस्या राधिकाया वयस्यानां वक्रोक्तिरियम्, तदत्र किमुचितमाचरणीयमिति। विचारणायां न चतुरोऽस्मि। ( इति सचिन्तस्तिष्ठति )।

**चन्द्रावली**—( तन्मुखमहः समालोक्य सवितर्कम् ) णाह! किं अणिमित्तं दुम्मनाएसि। ( नाथ! किम् अनिमित्तं दुर्मनायसे? )।

**कृष्णः**—प्रिये ! काचन दुश्चिन्ता कालव्याली लोकमिमं व्याकुलयन्ती प्रत्यवस्थिता ।

**चन्द्रावली**—( **सत्रासम्** ) णाह कालिअमहाहिणिसूदने तुमम्मि कुणो कालसप्पीए भअं । ( नाथ ! कालियमहाहिनिषूदने त्वयि कुतः कालसर्प्या-भयम् ? ) ।

**कृष्णः**—सुन्दरि ! ततोऽपि अतिकरालेयम् ।

**चन्द्रावली**—तदो किं कादव्वं । ( ततः किं कर्तव्यम् ? ) ।

**कृष्णः**—अनेन पथा सखीमण्डलं मण्डयतु भवती । यावदहमेनां व्यापादयामि ।

**चन्द्रावली**—वल्लह ! जह उइदं ! (वल्लभ ! यथा उचितम्) । ( **इति सत्रासं निष्क्रान्ता** ) ।

**सख्यः**- हला राहिए ! एहि उपसप्पिअ पेक्खम्म चरिदमेदाणं । ( हला राधिके ! एहि उपसृत्य पश्यामश्चरितमेतेषाम् ) ।

**कृष्णः**—( **निरूप्य** ) अहो ! इहैव सखीसमेता प्रियतमा । ( **विमृश्य** ) भवतु तावत् । अस्मिन्नर्थे प्रागेव समादिष्टौ सुबलप्रबलौ । ताभ्यामेवाविदूरवर्तिभ्यां लोकोत्तरकलाकौशलाभ्यां सकलमविकलं समधास्यते । तदधुना अन्येन वर्त्मना[1] निःशङ्कमेवोपसर्पामि । ( **इति तथाकरोति** ) ।

**राधा**—हला मअणमोइणि ! मणोअरंजिणि ! कधंदाणी ण सुणीअदि ताणं णम्मालावो । ( हला मदनमोदिनि ! मनोजरञ्जिनि ! कथमिदानीं न श्रूयते तयोर्नर्मालापः ? ) ।

( **उपसृत्य** )

**कृष्णः**—प्रिये ! कथय कयोर्नर्मालापः ? कीदृशो वा ?

**सख्यः**—( **सकषायविषादम्** ) चंदाअली-माहवाणं । ( चन्द्रावली-माधवयोः ) ।

**कृष्णः**—( **सस्मितावहित्थम्** ) प्रिये ! शशधरश्रेणिवैशाखयोर्नर्म्मालापस्तावदघटमान एव । माधवराधयोरेव समानार्थता जगति प्रसिद्धा ।

**सख्यः**—संपदि विहिणो दुच्चरित्तेण गदो सो समओ । जलअविलासिणा समअेण सव्वं अण्णधा किदं । ( संप्रति विधेर्दुश्चरित्रेण गतः स समयः । जलदविलासिना समयेन सर्वमन्यथाकृतम् ) ।

---

१. मूले 'वर्णना' इति पाठोऽसंगतः ।

**कृष्णः**—प्रियतमे ! जलदविलासिनि समये चन्द्रावलिरुचितिरोधानमेवोचितम्, तत्प्रस्तुतमभिधेहि। किमिति दुरन्तरोषावेशविषण्णेव दृश्यसे ?

**सख्यः**—यच्छुदं सुणेहि । (**"न राधिका मोदवहावनस्थलीत्यादि पठित्वा"**)। कधेहि अस्स को अत्थो। (यच्छ्रुतं शृणु। कथय अस्य कोऽर्थः ?)।

**कृष्णः**—(**सावहित्थस्मितम्**) प्रत्यक्षमेवेक्ष्यतामस्यार्थो यन्मण्डलीभूतानां वकीनां स्थितिश्चन्द्रवदावलिता। तेनेयं वनस्थली नराणामधिकामोदवहा; किन्तु कस्येदं पद्यमिति ?

**राधा** "दासो यद्यपराधभूरित्यादि पठित्वा पादयोर्निपतितं येन"।

**कृष्णः**—(**चिरं चिन्तां नाटयति**) प्रियतमे ! अद्यापि न लब्ध एवास्याभिसन्धिः। भवतु, किमप्रस्तुतानुसन्धाननिर्बन्धेन।

कृपा चेत्सिञ्चाङ्गान्यमृततुहिनस्यन्दिवचनै
स्वदासे रोषश्चेद् वितर चरणाघातशतकम्।
अथौदास्यं धत्से यदि तदपि मय्यस्तु हतके
परन्तु श्वासैस्त्वं मलिनयनबिम्बाधरमहः ॥ ४६ ॥

**अपि च**—

वपुर्वल्ली राधे तिरयति शिरीषस्य मृदुतां
ततः किं ब्रूमस्ते हृदयकमलं कोमलमति।
अतः शङ्के पङ्केरुहमुखि समानस्त्वयि कथं
तदम्भोदम्भोलेरपि भवति यल्लेशदलने ॥ ४७ ॥

**राधा**—(**सरोषावहित्थम्**) अयि चंदाअलीपदालंकिदमउले ! कधमेदमप्पत्थुदं जंप्पसि। (अयि चन्द्रावलीपदालङ्कृतमौले ! कथमिदमप्रस्तुतं जल्पसि)।

**कृष्णः**—प्रियतमे ! किमिदमपि दूषणम् ? अपितु भूषणमेव। यत्तव कुन्तलकलापलीलानुकारि चन्द्रावलीपदालङ्कृतो मौलिः।

**राधा**—(**सकषायस्मितम्**) माणद ! एवं णेदं। (मानद ! एवं न्विदम्)।

**कृष्णः**—प्रियतमे ! समाकलय—

मयि प्रेमाणं चेच्छ्लथयसि गुणं त्वय्यपि मम
श्लथीभूतो नूनं द्विगुणरहितस्तन्तुरपि कः ?
अतस्त्वं प्राचीनानपरिगणितांश्चुम्बनयुतान्
परीरम्भानम्भोरुहमुखि मदीयान् वितर मे ॥ ४८ ॥

(**इति बलादालिङ्गति**)

**राधा**—( सान्तःप्रमोदबहिः कपटाटोपम, संस्कृतेन )—

चन्द्रावलीनाम्नि दृढानुरागाच्चन्द्रावलीं यः शिरसा हृदा च ।
विभर्त्यशङ्कः स कथं विटङ्कः करोति मामङ्कगतां विधातः ॥ ४९ ॥

**कृष्णः**—( अनाकर्णितकं नाटयति ) नेपथ्ये—

वक्त्रं चन्द्रः स्मितलवरुचश्चन्द्रलेखाललाटं
चन्द्रस्यार्द्धं सुमुखिनखराश्चापि चन्द्रावितन्द्राः ।
इत्थं नक्तन्दिवमविकला निष्कलङ्का कलाभि-
र्या लब्धा श्रीर्मदनजलधेः साऽसि चन्द्रावलि त्वम् ॥ ५० ॥

**अपि च**—

कमलमुखि कलापे किं कलापप्रलापै-
स्तवचिकुरकलापे यत्कलानां विलासः ।
तदपि किमपि [1]लज्जंस्तं विलोक्यापि नृत्यं
विरचयति कलापी नव्यमेवभ्रमेण ॥ ५१ ॥

**कृष्णः**—( श्रुतिमभिनीय ) प्रियतमा वयस्या ललितादयः समाकलयन्तु । कोऽसौ सुललितवाग्विलासेन चन्द्रावलीमुल्लासयति ?

**सख्यः**—( समाकर्ण्य सविस्मयकुतूहलम) तुह् सागुराअवअणं खु सुअसारिआओ पढंति । ( तव सानुरागवचनं खलु शुकसारिकाः पठन्ति ) ।

( पुनस्तत्रैव ) णाह ! मैवं भण किंदु एवं म पडिहादि । ( नाथ ! मैवं भण; किन्तु एवं मे प्रतिभाति ) । ( इति संस्कृतेन )—

सकलकलावन्मौलिः कलयसि यत्त्वं कलापकं मौलौ ।
इत्यु[2]न्नमितकलापं नृत्यति परितः कलापिनां वृन्दम् ॥ ५२ ॥

**सख्यः**—( समाकर्ण्य ) इदंपि सुअवहूए पलविदं । ( इदमपि शुकवध्वाः प्रलपितम् ) ।

**कृष्णः**—प्रिये ! द्रष्टव्यमेतच्छुकशुकीमिथुनम् ।

**सर्वाः**—एवं णेदं । ( एवं न्विदं ) ( इति परिक्रामन्ति )

**( ततः प्रविशतश्चन्द्रावलीकृष्णवेषधारिणौ सुबल-प्रबलौ )**

**प्रबलः**—प्रिये चन्द्रावलि ! "सा राधिका कोकिलमञ्जुभाषिणी, नैवं यथा त्वं मनसोऽनुरञ्जिनी" । ( इत्युक्ते )

---

१. अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम, तेन लज्जन्निति परस्मैपदम् ।
२. 'उन्नमति' इति मूले ।

**कृष्णः**—( पुरतोऽवलोक्य सविस्मयम् )—

एतत् प्रिये पश्य किमैन्द्रजालिकम् ।
किं ते सखीभिः कुहकं प्रकल्पितम् ॥ ५३ ॥

**राधा**—( सविस्मयकौतुकम् ) इयं खु चंदाअलीज्येव । अपरं खु सअंज्जेव अप्पाणं पुच्छ किं एसो तुमंज्जेव तुमंति । ( इयं खलु चन्द्रावल्येव अपरं खलु स्वयमेवात्मानं पृच्छ किमेष त्वमेव त्वामिति ) ।

**कृष्णः**—( सकपटसन्देहम् ) प्रिये ! अस्मिन्नर्थे वयमपि शङ्कापङ्कनिमग्ना एव तदभ्यासमभ्येत्य निश्चिनुमः । ( इति तथाकुर्वन्ति ) ।

**सुबलः**—सुन्दर गोउलींदनंदन ! को एसो तुअरूअधरो ? ( सुन्दर गोकुलेन्द्रनन्दन ! क एष तवरूपधरः ) ?

**प्रबलः**—प्रिये ! इयं राधायाः सखीमद्वेषपरिग्रहेण भवतीं व्यामोहयितुं समागता ।

**कृष्णः**—कान्ते ! सन्देहकान्तारसंतरणार्थमागतस्य वचनमिदं ममानन्तसंतोषाय । यदहमनेन वचसा भवत्याः सखीकृतः । तदनयोः परिचयाय सर्वथा यतनीयम् । ( स्मृतिमभिनीय ) आ ज्ञातं प्रियतमे ! नन्वनयोरेव नर्मालापमाकलय्य भवत्याहमपराद्धीकृतः ।

**राधा**—( स्वगतम् ) होइ एवंज्येव होई । ( भवेदेवमेव भवेत् ) । ( निपुणं निभाल्य प्रकाशम् ) सुंदर ! अवि एदे सुवलप्रवलाओ होंति । ( सुन्दर ! अप्येते सुवलप्रवलौ भवेताम् ? ) ।

**कृष्णः**—कथं ज्ञातम् ?

**राधा**—तादिसोज्जेव सरो सुणीअदि । ( तादृगेव स्वरः श्रूयते ) ।

**सुबलः**—धुत्तकोसि तुमं । अअंज्येव मे पिअवअस्सो कण्हो ता तुमं मुंचिअ अप्पणो पिअसमीपं गच्छामि । ( धूर्तकोऽसि त्वम् । अयमेव मे प्रियवयस्यः कृष्णः । तत् त्वां मुक्त्वा आत्मनः प्रियसमीपं गच्छामि ) । ( इत्युपसर्पति बलात्कृष्णमालिङ्गति ) ।

**सर्वे**—( सहासकौतुकम् ) प्पिअे चंदाअलि ! किं णेदं ? णिअकान्तं मुंचिअ परपूरुषं कधं आलिंगेसि । ( प्रिये चन्द्रावलि ! किं नु इदम् ? निजकान्तं मुक्त्वा परपुरुषं कथमालिङ्गसि ? ) ।

कृष्णः—( **स्पर्शं नाटयित्वा** ) प्रिये ! सत्यमेवात्थ। सुबलोऽयमेव। ( **इति तद्वेषमुत्तारयति** )।

राधा—( **सावहित्थकपटक्रोधम्** ) सुबल ! एवंज्जेव अम्हे परिहसणीआ (ओ) ता इदो गच्छम्ह। ( सुबल ! एवमेव वयम् परिहसनीयाः ? तदितो गच्छामः )। ( **इति निष्क्रान्तः** )।

कृष्णः—( **सस्मितम** ) साधु समाहितं भवद्भ्याम्। तदागच्छतम्, वयमपि राधामनुसरामः। ( **इति निष्क्रान्ताः सर्वे** )।

**॥ इति सामोददामोदरो नाम चतुर्थोऽङ्कः ॥ ४ ॥**



## ॥ अथ पञ्चमोऽङ्कः ॥

( ततः प्रविशति शुकनामकिन्नरमिथुनम् )

**शुकी**—भो वल्लह ! किति अंतरानंदकन्दलिताव्व[1] णिणंतर विलच्छणा लच्छीअदि भवदो मुह[2]त्थी ? ( भो वल्लभ ! किमिति अन्तरानन्दकन्दलितेव निरन्तरविलक्षणा लक्ष्यते भवतो मुखश्रीः ? ) ।

**शुकः**—स्वप्रेयसीनां वाचिककलापव्याकुलीकृतचेतसो गोकुलभूपालनन्दनस्य वचसि माधुरीधुरीणता[3]मवधार्य ।

**शुकी**—कीरेसी सा ? ( कीदृशी सा ? ) ।

**शुकः**—अद्य तावत् प्रथमं चम्पकलतिकाया वयस्यया रहस्यनङ्गपत्रिका समर्पिता ।

**शुकी**—तदो तदो ? ( ततस्ततः ? ) ।

**शुकः**—ततस्तां कराभ्यामुपादाय सानन्दं वाचयितुमुपक्रान्तं तेन । तथाहि—

न ते ध्यानारण्येऽप्यभयमयते मानसमृगो
मनोजन्मव्याधो यदिह शरबाधां वितनुते ।
अलङ्कर्तुं नेत्रे प्रभवति न निद्रा सहचरी
कुतः स्वप्नेऽप्यास्तामहह मिलनं नाथ ! भवता ॥ १ ॥

**अपि च**—

पयस्यन्धे कूपे ज्वलननिवहे कालभुजगी-
मुखे किं वाऽन्यत्र क्वचन निधनाय व्यवसितम् ।
कुतः स्मायं स्मायं वलितकरुणं वारयसि मां
परीरम्भारम्भे भवसि कथमन्तर्हि रसिक[4] ! ॥ २ ॥

**शुकी**—णाह ! किं उत्तरिदं तेण ? ( नाथ ! किमुत्तरितं तेन ? ) ।

**शुकः**—चिराद् विद्रुनहृदयेनानेनापीदमेव समलेखि ।

---

१. 'कन्दलिलव्व' इति मूले ।  २. 'मुल' इति मूले ।
३. 'धुरीणतावधार्य' इति मू० पु० ।  ४. 'रसिकः' इति मूलपुस्तके ।

हृदयमधिवसन्ती स्मेरवक्त्रेन्दुकान्त्या
स्मरशरनिहतं मां वर्तसे जीवयन्ती ।
त्वयि किमिह निवेद्यं किं तवास्तामवेद्यं[१]
मुखरयति भवत्याः पत्रमेतत्तथापि ॥ ३ ॥

**तद्यथा**—

अधिरजनिविधाता रक्षणं चेद् विधाता
हृदयमधिशयानान्निर्दयात्पञ्चबाणात् ।
उचितमिह तदा यत् किं वृथा तत्कथाभिः
विधुमुखि तव पत्रस्योत्तरं स्यात्क्रियैव ॥ ४ ॥

**शुकी**—तदो तदो । ( ततस्ततः ? ) ।

**शुकः**—तदविलम्बितमेव कमलमालायाः सहचर्या सपर्यनुयोगं किमप्यावेदितम् ।

**शुकी**—किं तत् ?

**शुकः**—

व्योमव्याप्तं जलदपटलैरन्धकारः करालो
वारां धाराः करिकरसमा भीरुरेषा किमेतत् ?
इत्थं यद्यद्गतिविघटकं शङ्कितं तत्सखीभि-
र्जातं तन्व्यास्त्वदभिसरणे कारणं तत्तदेव ॥ ५ ॥

तथाप्यप[२]क्वपुण्यवती भवत्संगममङ्गलेन नाङ्गीकृतेति ।

**शुकी**—तदो तदो ? ( ततस्ततः ? ) ।

**शुकः**—तदव्यवहितमेव शृङ्गारसरस्या वयस्ययापि किञ्चिदावेदितम् ।

तन्वी रत्नमरीचिरञ्जितगृहाद् भीताङ्गणं संगता
तस्मिश्चन्द्रमहः समीक्ष्य तरसा कासारमासेवते ।
तत्राप्यम्बुजिनीवनेषु नटने भृङ्गीभिरङ्गीकृते
हंहो कालभुजङ्गिनी ग्रसति मामित्येव संमूर्च्छति ॥ ६ ॥

एवं रसतरङ्गिण्या अपि प्रियसङ्गिन्या वागियमङ्गीकृता—

---

२. मूले 'निवेद्यः' इति । १. 'वङ्क' इति मूले ।

त्वां निर्माय रहः कुरङ्गनयनाकस्तूरिका कूर्चके-
नानङ्गाभरणाङ्गरागविभवं स्मेरासमीक्ष्यादरात् ।
सद्यः स्विद्यति कम्पते पुलकति क्राम्यत्यलं निन्दति
त्वं मा मा स्पृश धूर्त मुञ्च चरणावित्याकुलं जल्पति ॥ ७ ॥

**शुकी**—तदो तदो ? ( ततस्ततः ? ) ।

**शुकः**—तदैवातित्त्वरितमुपसृत्य आपातहृद्यं पद्यद्वयं निगदितं तत्प्रिय-सहचरेणा[1]शुवचनेन ।

मुक्ताहारालङ्कृतिवसनक्रीडाविभूषिता दीना ।
कमलालया हि सकला गोकुलबाला समाकलिता ॥ ८ ॥

**अपि च**—

उपचितकुमारलीला शिखिचन्द्रकमौलिवल्लभा गौरी ।
प्रियमिलितार्द्धशरीरा शक्तिमती सर्वतः सकला ॥ ९ ॥

**शुकी**—तदो तदो ? ( ततस्ततः ? ) ।

**शुकः**—ततश्चिरं विमृश्य किञ्चिदध्यवस्य सर्वान् विसर्जितवान् ।

**शुकी**—किं तं ? ( किं तत् ? ) ।

**शुकः**—प्रायो रासविलासप्रसादेन सफलयिष्यति सर्वासामेव प्रेयसीनां स्मरकलासु कौशलम् ।

**शुकी**—( **साह्लादम्** ) साद्धु साद्धु अम्हेहिं णिहिलेहिं ण[2]अणाणं फलं उवलहिदव्वं । ( साधु साधु । अस्माभिर्निखिलाभिर्नयनयोः फलमुपलब्धव्यम् ) । (**नेपथ्ये**) ( **ससाध्वसम्** ) भो भो पिअवअस्स ! एसो रक्खसो रक्सीये सह रुक्खं-तरिदो हुविअ अम्हाणंज्जेव भुंजिदुं किंपि मंतेदि । ता एदाणं जमसअणं पत्थावेहि । (भो भोः प्रियवयस्य ! एष राक्षसो राक्षस्या सह वृक्षान्तरितो भूत्वा अस्मानेव भोक्तुं किमपि मन्त्रयति, तदेनं यमसदनं प्रस्थापय ) ।

**शुकः**—( **श्रुतिमभिनीय सकौतुकम्** ) प्रेयसि ! प्रायशो भद्रमुखः प्रलपत्य-स्मदालापमाकलय्य । तन्नूनमित एव गोकुलेन्द्रनन्दनेनादूरवर्तिना भवितव्यम् । तदेहि भद्रमुखालक्षितं किमपि कुञ्जान्तरं प्रविश्य तत्सुषमां प्रत्यक्षीकृत्य चक्षुषी सफलयावः । ( **इति निष्क्रान्तौ** ) ।

---

१. 'आशु वचनेन' इति, 'सुवचनेन' इति वा पाठः ।

२. मूले 'अणाणं' इत्येव ।

( प्रवेशकः )

( ततः प्रविशति भद्रमुखेना[1]नुगम्यमानः कृष्णः )

कृष्णः—( परितः सरांसि समीक्ष्य ) प्रायशः सर्वजनोत्सवमुच्छलयन्ती शरत् समजनि । तथा हि—

शीतानि स्मितवत्सरोरुहदृशः स्निग्धानि मुग्धादृशो-
ज्योत्स्नावन्मधुराण्यनङ्गतरला बिम्बाधरास्वादवत् ।
स्वच्छान्युच्छलदंशुकुण्डलवलद्गण्डस्थलद्योतवत्
तन्वङ्ग्याः शरदैव संगमवशादम्भांसि[2] संभावये ॥ १० ॥

अपि च—

श्रीमत्समस्तहरिता[3] हरितार्चिषा वा
रम्येण सस्यनिकरेण करेण चेन्दोः ।
संपन्नयालिविभवैर्विभवैश्च कामः
कुर्यात्कथं न शरदा[4] शरदा न दुःखम् ॥ ११ ॥

( स्वगतम् )

नोत्तरङ्गतरलातरङ्गिणी मेदिनी च न कलङ्कपङ्किनी ।
नाम्बरे वलिनिमानशंबरे शम्बराररिपि वीतसंवृतिः ॥ १२ ॥

भद्रमुखः—( साट्टहासम् )—

इन्द्रनीलमणिकुंदसुंदरे ही कलिंदगिरि णंदिणीजले ।
उल्लसंति कमलाइ नंदजे सुंदरी दिविविलोअणवली ॥ १३ ॥

अवि अ—

विब्भदी ललिदपत्तसंहुतिं मालदी कुसुविदा विरेहइ ।
णंदणंदणमुहिंदु दंसणे मंद मंद हसिदव्व सुंदरे ॥ १४ ॥
( इन्द्रनीलमणिकुन्दसुन्दरे ही कलिन्दगिरि नन्दिनीजले ।
उल्लसन्ति कमलानि नन्दजे सुन्दरी दिव्यविलोचनावली) ॥ १३ ॥

अपि च—

( बिभ्रती ललितपत्रसंहतिं मालतीकुसुमिता विराजते ।
नन्दनन्दनमुखेन्दुदर्शने मन्दमन्दहसितमिव सुन्दरे ) ॥ १४ ॥

---

१. "ततः प्रविशति भद्रमुखः" इति मूले । २. मूले 'दंभा' इत्येव सिच्युतः पाठः ।
३-४. मूले 'हरिता' इति 'शरदा' इति च न आवृत्तम् ।

**कृष्णः**—

दिशि दिशि कुसुमितकासा हासविकासाः शरत्सरोजाक्ष्याः।
हंसा हंससुताया रोधसि तस्याः कलाञ्चिता काञ्ची ॥ १५ ॥

( **परितोऽवलोक्य** ) सखे ! प्रायः समजनि सायं समयः। तदिदानीमितो गत्वा सायन्तनीं कालिन्दीतटोपवनशोभां निभालयामः। ( **इति तथाकृत्वा** ) वयस्य ! पश्य पश्य—

राजीविनी रमणकैरविणी प्रियाभ्यां
संभाविता युगपदेव करग्रहेण।
प्रत्यक् पुरो गिरिदरीगृहरागभाजोः
सन्ध्याद्वयोः क्वचन मुञ्चति नानुरागम् ॥ १६ ॥

**भद्रमुखः**—( **संस्कृतमाश्रित्य** ) वयस्य ! सन्ध्येत्युपलक्षणम्। प्रायः परपुरुषानुरागशालिन्यो विलासिन्यः।

**कृष्णः**—( **स्वगतम्** ) कथं व्रजवनितानां मय्यनुरागशालिताऽनेन समलक्षि ? ( **प्रकाशम्** ) वयस्य ! कथमधिगतमेतत् ?

**भद्रमुखः**—एवं णेदं। ( एवं न्विदम् )। ( **संस्कृतेन** ) पश्य पश्य—

आशां पाशायुधपरवशां पद्मिनीशेन सन्ध्या-
मुर्वी[1]देवैर्भुवनसुषमां ध्वान्तसंपद्भुजङ्गैः।
सक्तामैन्द्रीं दिशमपि निशानायकेनेक्षमाणः
पद्मासद्माऽ[2]प्ययति मधुपच्छद्मना पद्मनाभः ॥ १७ ॥

**कृष्णः**—( **सोपहासम्** ) अत एव अप्राकृतकवितापरप्रेयसीभवत्यतिप्रसक्ता।

**भद्रमुखः**—( **साट्टहासम्** ) वअस्स ! संतदं तुह संसंगिणो मम किमेदं असंगतं ? ( वयस्य ! सन्ततं तव संसर्गिणो मम किमेतदसंगतम् ? )।

**कृष्णः**—( **प्रतीचीमवलोक्य** ) सखे ! पश्य पश्य—

अयमतिकुतु[3]कान्निधिः कलानां करकलिताम्बरमुद्धरो विहर्तुम्।
इति किल चरमा हरिन्नवोढा मिहिरमिषान्निरवापयत्प्रदीपम् ॥ १८ ॥

---

१. मूलपुस्तके 'मुवर' इति 'भवनमुखमा' इति च पाठोऽसंगतार्थः।
२. मूलपुस्तके 'सद्मायति' इति, व० पु० 'सद्माऽप्य (य) यति' इत्येवं पाठः।
३. 'कुतिका' इति मूले।

**भद्रमुखः**—( **सकरुणम्** ) वअस्स ! कधंविअ कमलवणंतरालें करुण आकंदो सुणीअदि। ( वयस्य ! कथमिव कमलवनान्तराले करुण आक्रन्दः श्रूयते ? ) ।

**कृष्णः**—वयस्य ! समाकलय—

क्षपापारावारे बत दिवसपोताद्विघटिता-
दुडुव्याजादाविर्भवति परितो रत्ननिकरे।
अहो कष्टं कष्टं द्युमणिरपि नष्टोम्बरतला-
दिति क्रन्दन्त्येते रथपदमिषाः पोतवणिजः ॥ १९ ॥

**भद्रमुखः**—( **प्राचीमवलोक्य सत्रासम्** ) भो वअस्स ! परित्ताहि। गोअद्धणुद्धरणे तुअत्तो खंडिदाहंकारो आहंउलो दाणिं उद्दंडकोवचंडिमाजलत्तं डहणपिंडं गेन्हिअ णिअदिसामुहाहिमुहं धावेदि। णूणं अम्हाणंजेव्व उहिस्सदि। दिट्ठं दावाणलकवण समए तुह समत्थत्तणं। (भो वयस्य ! परित्रायस्व। गोवर्द्धनोद्धरणे त्वत्तः खण्डिताहंकार आखण्डल इदानीमुद्दण्डकोपचण्डिमाज्वलन्तं दहनपिण्डं गृहीत्वा निजदिशामुखाभिमुखं धावति। नूनमस्मानेव धक्ष्यति। दृष्टं दावानलकवलनसमये तव सामर्थ्यम् )।

**कृष्णः**—( **विहस्य** ) वयस्य ! भवतो वि[1]हीना कविताप्यन्तरामोदिकैव। तदलमन्यथासंभावनाभयावेशेन। पश्य पश्य—

प्रभवति मयि हंसः पद्मजातानुरक्तः
किमिह तिमिरकालव्यालजालेन भुक्तः।
इति किमुदयशृङ्गा सङ्गकृल्लोहिताङ्गः
किरति न खररश्मीन् दिक्षु राजा द्विजानाम् ॥ २० ॥

तद् वयस्य प्रातर्भगवतः कुम्भसंभवस्यार्चासंभारसंपादनाय भवान् भवनं प्रयातु, पुरतोऽहमपि तत्समुचितकुसुमान्याचिनोमि।

**भद्रमुखः**—जह आणवेदि वअस्सो। ( यथाज्ञापयति वयस्यः ) ( **इति निष्क्रान्तः** )।

**कृष्णः**—( **समन्ताद् वनशोभां निभाल्य परमानन्दपरवशतां नाटयति** )

( **नेपथ्ये** )

उपरि तुहिनभानुश्चन्द्रिकाचन्द्रचूर्णै-
रधिधरणि वनाली पुष्पधूलीचयेन।
मरुदपि च समन्तात्कैरवाणां परागै-
र्घटयति पटवासांस्त्वद्विलासान् दिदृक्षुः ॥ २१ ॥

---

१. 'विहीणा' इति मू० पु०।

**कृष्णः**—( **श्रुतिमभिनीय** ) प्रायो वनदेवतायाः परमानन्दाविष्कारोऽयम् । ( **इति परितोऽवलोक्य सोत्कण्ठम्** ) कथमधुनापि न प्रियतमाः समायाताः ? तदासां मनसामाकर्षणपटीयसीं मुरलिकां गीतिमन्त्रावलीभिरुल्लासयामि । ( **इति तथाकरोति** ) ।

( **नेपथ्ये** )

दुग्धाम्भोनिधिनिन्दि सुन्दर[1]सुधाधामत्विषा प्रोल्लसद्-
दिग्जालेष्वलिगुञ्जितेन विजिते वीणानिनादादरे ।
मन्दस्पन्दनचन्दनानिलभरादानन्दिभूमन्दिरे
रासोल्लासवशादयं विजयते कंसारिवंशीध्वनिः ॥ २२ ॥

( **ऊर्ध्वमवलोक्य** ) प्रायशोऽम्बरतलावलम्बिनीनां देवनितम्बिनीनामयं कलाकलापः संवलते । ( **इति सोल्लासं पुनर्मुरलीमापूरयति** ) ।

( **नेपथ्ये** )

पत्युः प्रेम यशः कुलस्य कुलजावृन्दस्य संमाननं
सौहार्दं पतिदेवतापरिषदः शीलं बलञ्चात्मनः ।
यस्यास्वादवशेन गोपसुदृशां द्रागेव निःस्वीकृतं
बिम्बीदल्लिफलाधरे मुरलिकागीतं तदुज्जृम्भते ॥ २३ ॥

**कृष्णः**—( **श्रुतिमभिनीय** ) साधु वनदेवते ! साधु, श्रुतिपुटपेयपीयूषमेवैत-दुद्गिरसि । ( **इत्यन्यतः श्रुतिमादधाति** ) ।

( **पुनर्नेपथ्ये** )

वामं नाञ्चितमञ्जनेन नयनं कर्णे न किं दक्षिणे
बाले कुण्डलमीक्षसे विगलितां नीवीं विलज्जे न किम् ।
नेपथ्यं न समाप्य गच्छसि कथं प्रेमान्धबुद्धे न किं
धत्से कञ्चुकमञ्चलं च कुचयोः काञ्ची कथं चोरसि ? ॥२४॥

पुनस्तत्रैव—

अलं पत्रालीभिस्त्वरयसि कथं नालि ! गमने
व्रजोत्तंसः शंसत्यपि हि कलयन्नाम मुरलीम् ।
अलङ्काराणां च प्रियसखि ! ममालंकरणता
प्रसन्ने प्राणेशे यदिह गुणहीनापि सुभगा ॥ २५ ॥

---

१. 'सुन्दरि' इति मू० पु० ।

**कृष्णः**—( **श्रुतिमभिनीय सानन्दम्** ) हृदय ! समाश्वसिहि । प्रायशः प्राणसमानां समागमनसुधाजलधेरयं कल्लोलकोलाहलः । यदभ्यर्ण एव सुरतरङ्गिणीसंगतानां कलहंसकानां कलकूजितानि ( **परितोऽवलोक्य** ) तदपि प्रिये मुरलिके ! मत्केलिकदम्बकादम्बिनि ! साधु साधितं भवत्या यदिमा महारससंभारसंभाविताः सहसा विलासवाहिन्यः ( **इति सोत्कण्ठस्तिष्ठति** ) ।

( **ततः प्रविशति गृहीतनेपथ्यं कान्ताकदम्बकम्** )

( **परितोऽवलोक्य सानन्दमन्योऽन्यं, संस्कृतेन** ) अयि ! पश्य पश्य—

दयितस्य कलानिधेर्वियोगाद्
गरलं गीर्णवती कुमुद्वतीयम् ।
वमति भ्रमरच्छलेन तस्मिन्न-
मृतस्यन्दिनि संगते तदेव ॥ २६ ॥

( **पुरतोऽवलोक्य अन्योन्यं संस्कृतेन** ) वयस्याः ! पश्यत पश्यत—

धवल[1]मृदुपस्निग्धां मुग्धद्युतिं दधदुन्नतिं
मुकुररुचिरज्योत्स्ना जालोज्ज्वलीकृतदिङ्मुखः ।
नलिनमलिनीकारायोद्यत्करः स कलानिधि-
र्विहसति पुनस्तन्वन्नुच्चैश्चकोरदृशां मुदम् ॥ २७ ॥

**अपि च**—

सुवर्णमयमध्यमा कमलरागभागन्तयो-
र्महेन्द्रमणिमञ्जरीविरचिताङ्कयुग्मश्रियोः ।
स्फुरत्किरणहीरकोल्लसितरन्ध्रजालाञ्चिता
करे मुरलिका हरेर्जयति सर्वसंमोहिनी ॥ २८ ॥

**इति सत्रासाभिलाषस्मयविस्मया धैर्यगाम्भीर्यलोचनाञ्चलचमत्कारमुपसर्पति** )

**कृष्णः**—( **अनालोकनं नाटयित्वा स्वगतम्** ) इयं लावण्यनिर्माणनैपुण्यधन्यतास्थानम् ।

मसृणघु[2]सृणजालं निन्दयन्त्यङ्गकान्त्या
कुवलयदलदामोद्दामधामेक्षितेन
विलसदुरसिजाभ्यां शातकुम्भस्य कुम्भौ
विधुमपि मुखभाषा भाति चन्द्रावलीयम् ॥ २९ ॥

---

१. मूलपुस्तके 'वलभिदुपस्निग्धां' इति पाठश्छन्दोभङ्गार्थासंगतिग्रस्तः ।
२. मूलपु० 'घुमृणा' इत्यनर्थकं छन्दोभङ्गश्च ।

इयं किल चम्पककलिका—

धन्यं धन्यं कुसुमधनुषः कौशलं यत्कृशाङ्ग्याः
सर्वाङ्गीणाद्युतिरुदयिनीनेत्रपात्रीभवन्ती ।
कोऽन्यो धन्यस्त्रिजगति युवा मादृशाद्भूरिपुण्यो
यस्मिन्नस्या नटति कुटिला दृष्टिपीयूषवृष्टिः ॥ ३० ॥

( **पुनरन्यामालोक्य** ) इयमियं कमलमाला—

वक्त्रं यत् कनकाम्बुजं वरतनोस्तत्कोरकौ च स्तनौ
नेत्रे नीलसरोरुहे करपदं रक्तारविन्दावली ।
तत्किञ्जल्कपरम्पराऽखिलतनुस्तन्मन्महे केवलैः
क्लृप्तेयं जलजैरनङ्गनगरी लक्ष्मीविलासस्थली ॥ ३१ ॥

( **पुनरन्यामालोक्य** ) इयमियं प्राणाधिका प्रेयसी—

लावण्यामृतवाहिनी मनसिजप्रेयोर्थचिन्तामणिः
सौन्दर्यद्रुमवाटिकाऽखिलकलारत्नैकसंपत्खनिः ।
शृङ्गारद्रुममाधुरी त्रिजगतश्चेतश्चमत्कारभू-
र्मूर्ता सर्वविलासगर्वनगरी राधेति वुध्यामहे ॥ ३२ ॥

**अपि च—**

श्रोणिः पृथ्वीदशनवसनं यत्र पानीयमङ्गं
प्रोद्यज्ज्योतिर्मुखसरसिजश्रोर्जगत्प्राणसारः ।
मध्यं व्योम स्फुरति किमियं नर्मनिर्माणधातुः
काऽप्येतस्यां कुसुमधनुषः सृष्टिशक्तिः प्रभूता ॥३३॥

( **इति सस्पृहावहित्थमालोकयति** )

**सर्वाः**—( **सविस्मयमात्मगतम्** )

किं पेक्खिदा ण अम्हे, पेक्खिअ किं वा वहीरणा विहिदा ।
अवहित्थज्जेव किदा हरि हरि हरिणा ण जाणम्ह ॥ ३४ ॥
भोदु परीच्छा कादव्वा ।

( किं प्रेक्षिता न वयं प्रेक्ष्य किं वाऽवधीरणा विहिता ।
अवहित्थैव कृता हरि हरि हरिणा न जानीमः ॥ ३४ ॥
भवतु परीक्षा कर्तव्या ) ।

(**इति ससाध्वसा पत्रपलघुपदन्यासमुपसृत्य पुरः क[1]मपि विटपिनं लक्षीकृत्य**)

---

१. मूले किंमपि ।

( संस्कृतेन )

त्यजसि न सिचयाञ्चलं कथं भो द्रुमकुसुमोज्ज्वलकण्टकाकुलाङ्ग ।
वितरसि परितः क्षतानि धत्से तरलचयः स्वरमास्रवन्मरन्दम् ॥३५॥

( काचिन्मधुकरं निरूप्य )

अधरो यमलिन्नवन्धुजीवप्रसवः किं नु मदान्धबंभ्रमीषि ?

( कस्मिश्चित्तमाले वपुरासज्य )

व्रतते स्तबकाविति स्तनौ मा विटपिन्निष्ठुरशाखपीडयेथाः ॥३६॥

( परस्परम् )

प्रसरति न पदं पुरः करश्च स्फुरति न कर्मणि कण्टकन्तितन्वः ।
प्रदहति बहिरन्तरं न धर्मो विरमति वेपथुरप्यलं किमालि ! ॥३७॥

कृष्णः—( श्रुतिमभिनीय, पुनर्मुरलीमापूरयति ) ।

सर्वाः—( सचमत्कारानन्दमाकर्ण्य, परस्परम् )—

अमृतद्रवधोरणी किमेषा लहरी किं गरलस्य भो वयस्याः ।

( निरूप्य )

विदितं विदितं न जातमोहं मुरलीगीतिरुदेति पूतनारेः ॥३८॥

कृष्णः—( पुरतः समालोक्य, स्वगतम् )

आगतं प्रमदाजालमबालेन्दुस्फुरन्मुखम् ।
तत्प्रेमगर्भिता वाचः श्रोतुमुत्कण्ठते मनः ॥ ३९ ॥

( प्रकाशं ) हंहो गोकुलपालिकाः ! कथ्यतां तावद् भव्यमव्याहतं भवतीनाम् ?

सर्वाः—( साकुञ्चनौत्सुक्यम् ) णाह दाणिज्जेव संभावीअदि । ( नाथेदानोमेव संभाव्यते ) ।

कृष्णः—कथयत कथमाकस्मिकमागमनम् ?

सर्वाः—( सस्मिताकूतम् ) सुहआणम्हा कधमाहूदाओ अम्हे भवदो मुरलीए ? ( सुभगारम्भाः कथमाहूता वयं भवतो मुरल्या ? ) ।

कृष्णः—( सहासम् ) समाकलितं किल कुलपालिका एव भवत्यः, यदलीकमुरलीकलेनैव समुल्लङ्घिता कुलमर्यादा, यस्मादेतादृशं साहसम् ।

रजन्यां घोरायां रजनि[1]चरकाकोदरशतैः
समाकीर्णेऽरण्ये कुलिशकठिने कण्टकिपथे ।
( सपुलकम् )
पृथुश्रोणीपीनस्तनगरिममध्याणिमजुषां
कृशाङ्गीनामत्रागमनमपि किं वः समुचितम् ? ॥ ४० ॥

**सर्वाः**—पिअम्वद अम्हाणंज्जेव एदं दूसणं । ( प्रियंवद ! अस्माकमेवेदं दूषणम् ) ।

( संस्कृतेन )
धैर्यं धिक्कुरुते त्रपां विधुनुते कौलं यशः प्रोञ्छति
प्रत्येकं गुरुगर्वगञ्जनशतं विस्मारयत्यञ्जसा ।
साध्वी नाम निराकरोति भवनं भर्तुर्विधत्ते विषं
किं किं नो विदधाति नाथ सुदृशां त्वत्प्रेयसी वंशिका ॥ ४१ ॥

**कृष्णः**—( सप्रमोदावहित्थम् ) अयि साहसिक्यः समाकलयन्तु—

यशो नाशः स्वस्य श्वशुरपितृवंशेऽपि कलुषं
वचः शल्यं श्वश्र्वाः श्रुतिकटुननान्दुश्च वचनम्[2] ।
सपत्न्याः स्मेरत्वं प्रियपरिजनस्याप्यभिभवः
कुलस्त्रीणां स्वैराचरणलतिकायाः फलमिदम् ॥ ४२ ॥

**सर्वाः**—( प्रेमपरवशतां नाटयन्ति ) ।

**कृष्णः**—( स्वगतम् ) अहो प्रेमपरिपाकः प्राणसमानाम् ।

( नेपथ्ये )
यशो नाशः स्वस्य श्वशुरपितृवंशेऽपि कलुषं
वचः शल्यं श्वश्र्वाः श्रुतिकटुननान्दुश्च वचनम् ।
सपत्न्याः स्मेरत्वं प्रियपरिजनस्याप्यभिभवः
समस्तं तच्छस्तं रमणकरुणावान् यदि भवान् ॥ ४३ ॥

**अपि च**—

नाथ ज्ञाता वचनरचनाचातुरी यन्मनोज-
ज्वालाजाल[3]ज्वलितहृदये स्त्रीजने धर्मशिक्षा ।
हास्यं न स्यात्कुजनसदसामीदृशां यत्प्रसङ्गा-
दानङ्गाधिं प्रशमय तथा जीवितं वा गृहाण ॥ ४४ ॥

---

१. 'रजनिकर' इति मूले ।    २. मूले 'वनामिति' चकारश्च्युतः ।
३. मू० पु० 'जाल' इति त्रुटितम् ।

**सर्वाः**—( **श्रुतिमभिनीय सपुलकमूर्ध्वमवलोक्य जनान्तिकम्** ) सोत्थि भोदीहीं । ( **स्वस्ति भवतीभ्यः** ) । ( **इति प्रणमन्ति** ) ।

**कृष्णः**—( **समाकर्ण्य [1]स्वगतम्** ) अये स्वर्वासिविलासिनीनां वात्सल्यं वचनचातुरी च । तदलमासामतिक्लेशसंपादिना वाग्विलासेन । ( **प्रकाशं सप्रणयम्** )—

शोणाम्भोरुहखञ्जरीटनटनप्रद्वेषनम्रीकृता
ताम्रीभूतमुखेक्षिघूर्णनमतिस्पन्दोप्यमन्दाधरे ।
प्रेमोद्गारि वचःप्रपञ्चनमथ भ्रूवल्लरीवक्त्रिमा
संपद्येत मयीति पङ्कजदृशो यूयं मया कोपिताः ॥ ४५ ॥

तदेतत्पश्यत वृन्दावनसौन्दर्यम् । ( **इति ताभिरेव समं कतिचित्पदानि परिक्रम्य सानन्दम्** ) प्रियाः पश्यत पश्यत—

प्रसूनानां भासा प्रचुररुचिनक्षत्रपटली
मधूलीबद्धालि[2]स्तबकसुषमाभिः शशधरम् ।
लसज्ज्योत्स्नाजालं तपनतनयासैकतरुचा
विनिन्दन्ती वृन्दावनधरणिरास्कन्दति दिवम् ॥ ४६ ॥

( **ऊर्ध्वमवलोक्य** ) प्रियाः पश्यत पश्यत—

गगनपिठरघूर्णत्कौमुदीदुग्धमध्या-
दुपनयति सुधांशुच्छद्महैयङ्गवीनम् ।
अपि च करगृहीताश्चन्द्रकान्तालिधेनू
रजनिरलघुदोग्धि क्षीरमाभीरनारी ॥ ४७ ॥

**अपि च**—

प्रियतमाः कलयन्त्वधिकौमुदी कुसुमकेलिगृहं स्मरसुभ्रुवः ।
उडुपहीरकसंपुटकोत्तरप्रकटमङ्ककुरङ्गमदं दधत् ॥ ४८ ॥

**सर्वाः**—( **इतस्ततोऽवलोक्य सकौतुकम्, संस्कृतेन** )—

स्फारस्फीतस्फटिकजठरस्वच्छया प्रोच्छलन्त्या
कान्त्याक्रान्ते जगति रजनीप्रेमबन्धोद्धुरस्य ।
पश्याश्चर्यं सुभग ! विकसन्मल्लिकासूल्लसन्तः
संलक्ष्यन्ते यदि हि मधुपाः केवलं गुञ्जितेन ॥ ४९ ॥

---

१. मू० पु० 'स्वगतम्' इति त्रुटितम् । २. मू० पु० 'ली' इति दीर्घः पाठः ।

**कृष्णः**—प्रियतमाः सम्यग् ब्रूत । अत एव दलितेन्द्रनीलश्यामलास्तमालाः मृणालजालतुल्याः समुल्लसन्ति । ( **इति सप्रणयमालिङ्गति** ) । ( **स्पर्शमनुभूय सानन्दम्** ) प्रियतमाः ! समाकलयन्तु—

वनभुवि मधुपानादङ्कगः पद्मिनीना-
मुपगतघनघूर्णः पिञ्जरस्तत्परागैः ।
ध्वनिभिरपि तदङ्गासङ्गिभृङ्गाङ्गनानां
विपुलयति विलासान्मालयोऽयं नभस्वान् ॥ ५० ॥

**सर्वाः**—( **सोल्लासमन्योन्यम्** ) भो वहिणिआओ सुणेध । आअच्छधा पिअ[1]दमसमुचिद दामणिम्माणत्थं कुसुमाइं अवचिणम्ह । ( भो भगिन्यः शृणुत, आगच्छत प्रियतमसमुचितदामनिर्माणार्थं कुसुमान्यवचिन्मः ) । ( **इति सर्वास्तथा कुर्वन्ति** ) ।

**कृष्णः**—( **निरूप्य स्वगतम्** ) किमस्मत्सविधे विद्यमाना राधैवेयम् । ( **प्रकाशम्** ) प्रियतमे ! समाकलय—

कर्पूरधूलिधवलं पुलिनं विलसत्परागसौरभ्यम् ।
हिमधामद्विगुणद्युतिः किं भो रम्भोरु रोचते तुभ्यम् ? ॥ ५१ ॥

**राधा**—(**सानन्दम्**) सुंदर ! कधं न रोअई जत्थ भवं रज्जई । (सुन्दर ! कथं न रोचते यत्र भवान् रज्यते ) ।

**कृष्णः**—तदत्रैव निराबाधमावयोर्विहरणमुचितम् । ( **इति समालिङ्ग्य सकरग्राहं परस्परसविलासालापमूर्ध्वमाकलय्य सप्रणयम्** )—

यः प्राक् कुरङ्गनयने तव साङ्गराग-
वक्त्रेण यामि समतामिति मूढरागः ।
व्यक्तं कलङ्कमधुना विधि[2]ना च्युताशः
प्रोद्दण्डपाण्डररुचिः स बिभर्ति चन्द्रः ॥ ५२ ॥

**राधा**—(**सलज्जावहित्थाकूतम्**) पिअदम ! पेक्ख थलस्स सोहग्गं । ( प्रियतम ! पश्य स्थलस्य सौभाग्यम् ) । ( **इति संस्कृतेन** )—

यमुनोन्मज्जनपूतां कुमुदवनीं पुष्पितां दयिताम् ।
रमयन् कुसुमशरासनदयितो मलयाद्रिमारुतोऽभ्येति ॥ ५३ ॥

---

१. 'रिअद' इति मूले पाठः ।
२. 'विधुना' इति मू० पु० पाठः ।

**कृष्णः**—( **सोल्लासम्** ) प्रिये ! नैषोऽपि तादृक् तोषाय यथा तवाश्लेषः, ( **इति पुनरालिङ्ग्य** ) अयि प्रणयिनि ! मनागुपविश्यतां यावत्स्वपाणिगुम्फिताभिर्मालाभिरलङ्करोमि भवतीम् । ( **इति तथाकृत्वा** ) प्रिये पश्य पश्य—

मुदितोन्मदालिमाला मृदुला चन्द्रावलीरुचिरा ।
इयमुत्कलिकावलिता सुमना न मनोविनोदिनी कस्य ॥ ५४ ॥

**राधा**—( **सकषायस्मितम्** ) सच्चं ज्जेवेदमिति । ( सत्यमेवेदमिति ) । ( **संस्कृतेन** )—

प्रियंवद ! प्रेमवशंवदेन ते हृदाञ्चितालम्बितमञ्जुलद्युतिः ।
मुदं ममोच्चैर्मनसस्तथादृशोर्न साम्प्रतं कां[1] सुमना विधास्यते ॥५५॥

**कृष्णः**—( **स्वगतम्** ) प्रायशः साकूतमालपितमिदं मनस्विन्या प्रेयस्या । भवतु तावद् बोद्धव्यम् ( **इत्यन्यतोऽवलोक्य** ), ( **यमुनाजलान्दोलितचन्द्रबिम्बमालोक्य** )—

दयिते त्वन्मुखसुषमालहरीता[2]ऽनसमुल्लसिता ।
भुवनान्दोलनलीलालम्बितचन्द्रावली बलते ॥ ५६ ॥

**राधा**—( **सगूढक्रोधम्** ) अए जलावलम्बिदचंदावलीविलासलालस ! एसज्जेव सुसमा समालोई अदु तुमए अहं खु पिअसहीमज्झं गदुअ कुसुमाएँ अवचिणोमि । ( अये ! जलावलम्बितचन्द्रावलीविलासलालस ! एषैव सुषमा समालोक्यतां त्वया अहं खलु प्रियसखीमध्यं गत्वा कुसुमान्यवचिनोमि ) । ( **इति निष्क्रान्ता** ) ।

**कृष्णः**—प्रायः एतच्छ्लोकार्थान्तरप्रत्याकलनक्लेशितान्तरेयं प्रस्थिता । तदस्या मानापनोदाय सत्त्वरमनुसरामि । ( **इति निष्क्रान्तः** ) ।

**सर्वाः**—( **समन्ततोऽवलोक्य सविषादमन्योन्यम्** ) हद्धी हद्धी किं णेदं वज्जाइदं आपादिदं ? ( हा धिक् ! हा धिक् ! किंनु इदं वज्रायितमापादितम् ? ) । ( **संस्कृतेन** )—

किमिह निलीनः कुतुकात्कयाचिदथवा हृतः कलावत्या ।
अथवा परिचितदोषा निःशेषा रसिकशेखरोऽहासीत् ॥ ५७ ॥

---

१. 'का' इति मूले पाठः ।
२. 'तोऽनलामुल्लसिता' इत्येवं मू० पु० ।

( इति सवैकल्यं तास्ताः लताः प्रति )

माधव्यास्ते क्व तव दयितस्त्वं तुलस्यालि सत्यं
जानास्येनं यदसि सुभगा गोकुलाधीशसूनोः ।
मालत्याद्याः कथयत ऋतं त्वं कलिन्दाद्रिकन्ये !
त्वं वा नीपप्रियसख वद प्राणनाथः क्व यातः ? ॥ ५८ ॥

( कियद्दूरं गत्वा ) नूनमनयैवासौ समालोकितः । यदिह—

प्रवालव्याजेन स्फुरदधरशोभां मधुलव-
च्छलेन स्वेदाम्भः पुलकपटलीमङ्कुरमिषात् ।
वहन्ती वासन्ती स्तवककुचभारानतवपुः
सखि प्रायः प्राप्ता व्रजपतिसुतालिङ्गनमियम् ॥ ५९ ॥

( पुनः पुलिनमागत्य )

समन्दः कालिन्दिस्फुटमनुसृतस्त्वां कुमुदिनी-
वनीभ्राम्यद्भृङ्गो चय[1]नयनभंगीं यदयसे ।
अहो मन्दं मन्दं हससि विकसत्कैरवकुल-
च्छलात्तत्किं न त्वं वदसि भगिनि क्वास्ति चपलः ? ॥ ६० ॥

( स्पर्शमनुभूय )

अये भ्रातर्जातो मलयगिरितश्[2]चन्दनवनी-
सनाभिः कावेरी नवकमलिनीकेलिरसिकः ।
[3]त्वमन्तः सन्तप्तः कथय किमिदं दक्षिणमरुत्
सखे ज्ञातं कृष्णस्तव मम च भोगी न सुखदः ॥ ६१ ॥

( कियद्दूरं गत्वा ऊर्ध्वमवलोक्य सविषादमन्योन्यम्) हंहो वयस्याः ! पश्यत दुरात्मनः ।सकलमपि क्लेशाय, यतः—

पुरारातेः क्रोधज्वलदनलजालेन सहसा
यशःशेषावस्थां गतवति रतिप्राणदयिते ।
कपालं तस्यैतत्कलहिमकरस्तत्करमिषात्
समीरेणाकीर्णः स्फुरति परितो भस्मनिकरः ॥ ६२ ॥

अन्याः— अहो ! अस्य पापात्मनः प्रेयस्यपि पापीयसी, यतः—

---

१. मू० पु० 'चयनभंगी यदसे' इति त्रुटिपूर्णः पाठः ।
३. 'तच्चन्दन' इति मू० पु० । २. 'तमन्तः' इति मू० पु० ।

सत्यं रत्या प्रगतवपुषे प्रेयसे पायसेन
प्रत्तः पिण्डः सितकरमिषाद् भाति विष्णोः पदान्ते।
ताराव्याजाद् विकिरनिकरः संभृतो यत्तिलानां
स्तोमश्चैष स्फुरति विगताशङ्कमङ्कच्छलेन ॥ ६३ ॥

भो भो वहिणिआओ! पेक्खत एदाइँ खु गोउलराअजुव राअस्स पअचिणहाइँ[1]। अंभोरुहदंभोलिध्वजं कुशलक्खिदाइँ लखीअन्ति। ता इमिणाज्जेव पंथेण पत्थिदो मे पिअदमो ता एणं अणुसरम्ह। (भो भो भगिन्यः! पश्यत एतानि खलु गोकुलराजयुवराजस्य पदचिह्नानि, अम्भोरुहदम्भोलिध्वजाङ्कुशलक्षितानि लक्ष्यन्ते। तदनेनैव पंथा प्रस्थितो मे प्रियतमस्तदेनमनुसरामः)। (इति कतिचित्पदानि परिक्रम्य, पुनः सविस्मयासूयम्) अम्हो पेक्खद पेक्खद कुसुमाउविहाराहणासादिद प्पसादाए पिअदम पेम्मसोहग्गरअणसंपुडिआए काए पदाइँ। तानि रूवीअदु अम्हाणं का उण एत्थ णत्थि। (अहो पश्यत पश्यत कुसुमायुधविहारार्हणासादितप्रसादायाः प्रियतमप्रेमसौभाग्यरत्नसंपुटिकायाः कस्याः पदानि। तन्निरूप्यतामस्माकं का पुनरत्र नास्ति)।

(नेपथ्ये)

पिअदम णिउंजकुंजर अंसअरग्गाहं पमोदिदाजाहं।
किं तं जूधविजुत्तं विरहालहुपंकसंगदं कुणसि? ॥ ६४ ॥
(प्रियतम निकुञ्जकुञ्जर अंसकरग्राहं प्रमोदितायाहम्।
किं तां यूथवियुक्तां विरहालघुपङ्कसंगतां कुरुषे?) ॥ ६४ ॥

**सर्वाः**—(श्रुतिमभिनीय) अम्हहे णूणं विरहज्जरवाहिआए राहिआए करूणा[2]प्रसारिणी वाणी सुणीअदि। ता उपसप्पिअ पुच्छम्ह। (अहो! नूनं विरहज्वरबाधिताया राधिकायाः करुणाप्रसारिणी वाणी श्रूयते। तदुपसृत्य पृच्छामः)। (इत्युपसर्पन्ति)।

(ततः प्रविशति यथानिर्दिष्टा राधा)

**राधा**—(पुरतः पल्लवितं रसालबालमालोक्य, सविषादम्) (संस्कृतेन) अये!

---

१. 'चिणाहाइँ' इति मूले।
२. 'वरुणा' इति मू० पु०।

तलावालं कृत्वा कलशजलसेकेन सततं
रसाल ! त्वं नीतः प्रबलसुखलोभादुपचयम् ।
तदास्तां कल्याणं भवतु भवतस्तात विलसत्
प्रवालैः किं शल्यं वितरसि दृशोर्नाथ विरहे ॥ ६५ ॥

( इति वैवश्यं नाटयति )

**सर्वाः**—( उपसृत्य ) पिअसहि राहिए ! कधेहि तत्तं किं णेदंति । ( प्रियसखिराधिके ! कथय तत्त्वं किं नु इदमिति ) ।

**राधिका**—( सकरुणगद्गदम् )—

मेरुगिरिणो गरुई पिअसहि जाहं किदा जेण ।
तूलकणादोवि लहू सिव सिव साहं विणा तेण ॥ ६६ ॥

( मेरुगिरेर्गुर्वी प्रियसखि याहं कृता येन ।
तूलकणादपि लघुः शिव शिव साहं विना तेन ) ॥ ६६ ॥

**चन्द्रावली**—( सोत्प्रासमात्मगतम् ) जुत्तंजेव एदं । अखव्वगव्वसुपव्वपव्वद[1]सिहरसमारूढाए अधप्पादादो निविडज्जेव पीडा । ( युक्तमेवेदम्, अखर्वगर्वसुपर्वपर्वतशिखरसमारूढाया अधःपातान्निविडैव पीडा ) ।

**सर्वाः**—हद्धी हद्धी ! हला राहिए तुमंपि अम्हेविअ दोहग्गगहग्गत्थासि । ( हा धिक् ! हा धिक् ! हला राधिके ! त्वमपि वयमिव दौर्भाग्यग्रहग्रस्तासि ? ) ।

**राधा**—( सकरुणम् )—

प्रयत्नैः कारूणां स्वमतिकृतया कङ्कतिकया
परिष्कृत्या सायं चिकुरनिकुरम्बं मम पुनः ।
चिरादेतद्योग्यं किमपि कुसुमं प्राप्य सुमना-
वनाद् यो मां प्रागात्सखि दहति मर्माणि स कथम् ॥ ६७ ॥

**अपि च**—

मृषा रोषावेशान्नमितवदनायामपि मनाग्
अनालम्बः पश्चादनुसरति यो मे सहचरीम्[2] ।
श्रुतौ ब्रूते तस्याः किमिदमिति शुष्यन्मुखविधु-
र्विना तं जीवामि क्षणमपि विधे हन्त किमिदम् ॥ ६८ ॥

---

१. मूले 'सुपव्वत' इत्येवं त्रुटितः पाठः ।
२. मूले 'सहचरी' इति'म्' च्युतः ।

**अपि च—**

मयि प्रेमा यादृग् व्रजपतिसुतस्यात्र तु मनो
मनोजो वा तत्त्वं सखि जगति वेत्तुं प्रभवति ।
ममाप्येतस्मिन् यच्चिरमुपचितं प्रेम किमपि
स्फुटं हा धिक् प्राणैः कठिनकठिनैस्तद्विघटितम् ।। ६९ ।।

**सर्वाः—( संहत्य )—**

कुपितकुलिशपाणेर्दाववह्नेर्विषाग्ने-
रसुरसमुदयेभ्यो रक्षिताः स्मस्त्वयैव ।
दयित ! कथमिदानीं त्वन्न कन्दर्पकाण्ड-
ज्वलनकवलकल्पा मादृशीः पासि दासीः ।। ७० ।।

**( इति वैकल्यं नाटयन्ति )**

**राधा—**अयि चंदाअलि ! अयि चंपअकलिए ! अयि सिंगारसरसि ! अयि रसतरंगिणि ! किं एत्थ अवत्थणेण । आअच्छध इदो गदुअ कालिंदिं वणदेवदं च पुच्छम्ह । (अयि चन्द्रावलि ! अयि चम्पककलिके ! अयि शृङ्गारसरसि ! अयि रसतरङ्गिणि ! किमत्रावस्थानेन । आगच्छत इतो गत्वा कालिन्दीं वनदेवतां च पृच्छामः ) । ( **इति निष्क्रान्ताः सर्वाः** ) ।

**।। इति रासविलासो नाम पञ्चमोऽङ्कः ।।**

## ॥ अथ षष्ठोऽङ्कः ॥

( ततः प्रविशति कालिन्दी )

**कालिन्दी**—( पुरो विलोक्य )—

मुक्ताहारोल्लसितहृदयोन्मत्तमातङ्गलीला
प्रोद्यत्कण्ठीरवपरभृतानन्दकृद्गण्डकार्चिः ।
ऋक्षश्रेणीद्विजकुलरुचिः प्रोल्लसत्कुण्डलित्त्विड्
वन्यश्रीः किं किमिह रमणी पुण्डरीकेक्षणेयम् ॥ १ ॥

( विमृश्य ) निर्णीतमियं वनदेवतैव ।

( प्रविश्य )

**वनदेवता**—कथमिहैव कालिन्दी ? ( उपसृत्य ) भगिनि भानुकन्ये ! इहैवासि ?

**कालिन्दी**—( ससंभ्रमम् ) देवि वृन्दे ! वृन्दारकवृन्दवन्दितपदारविन्दे ! प्रणमामि भवतीम् ।

**वनदेवता**—( ससंभ्रमम् ) कालिन्दि ! महदसमञ्जसमिदं यत्त्वमपि मां प्रणमसि ।

**कालिन्दी**—किमसमञ्जसम् ? त्वत्तोऽन्या का वा प्रणाममर्हति । यतः—

यच्चिन्तनं सुमनसां मनसां प्रयत्नै-
रष्टाङ्गयोगविधिना विधिनाप्यशक्यम् ।
तद्धाम वामनयना नयनाय वंशी
शंसीहते तव कदम्ब कदम्बमूले ॥ २ ॥

**वनदेवता**—अयि कलिन्दनन्दिनि ! यत्पादारविन्दधूलीधोरणीधारणेन धन्यास्मि, सा त्वमेवासि । तथाहि—

स्वीकृतरथाङ्गपद्मादररुचिरगदा नवाम्बुदश्यामा ।
श्रीवत्साधिकसुभगा भानुसुते त्वं प्रियातनुर्विष्णोः ॥ ३ ॥

**कालिन्दी**—देवि ! आस्तां तावदन्यः प्रस्तावः प्रस्तुतमभिधीयताम् । भगवति ! किमिति चिन्ताकुलितेव लक्ष्यसे[1] ?

---

१. 'लक्षसे' मू० पु० पाठोऽशुद्धः ।

**वनदेवता**—कालिन्दि ! किमिति स्थूलतमोऽपि प्रमादो नैव समधिगतो भवत्या यद्भगवतो गोकुलेन्द्रसूनोर्विरहे व्याकुला गोकुलबाला समालोक्य क्लेश-जलधिनिमग्नाऽस्मि ।

**कालिन्दी**—देवि किं ब्रवीषि ?

यत्रालोके[१] विषवदकृशद्वेषपात्रं निमेषः
पाणौ पाणौ भजति मिलनं वेपथौ चातिरोषः ।
अप्याश्लेषे पुलकपटलः क्लेशकृद् यस्य यासां[२]
धिग् दुर्दैवं क्षणमपि कथं तस्य [३]तासां वियोगः ॥ ४ ॥

**( इति व्याकुलतां नाटयति )**

**वनदेवता**—कालिन्दि ! समाश्वसिहि समाश्वसिहि । साधु प्रेमपरीपाको भवत्या, येनातितरां द्रवीभावमेवापादिताऽस्मि । तदेहि तदनुसंधानाय निर्बन्ध-माचरावः, ( इति तथाकुरुतः ) ।

**( नेपथ्ये )**

गोपीनां वचनामृतैरतितरामातर्पितः प्रोल्लसद्
रोमोद्भेदभराङ्कुरः स्मितलवोत्फुल्लप्रसूनाञ्चितः ।
स्वेदाम्भः कण[४]निर्गलन्मधुझरः[५] कन्दर्पखेलाफलः
संमोदं वितरेन्मनो मधुलिहां शृङ्गारकल्पद्रुमः ॥ ५ ॥

**अपि च—**

मञ्जीरव्रजकङ्कणावलिचलत्काञ्चीकलाशिञ्जिते[६]
वीणावेणुमृदङ्गझर्झरकरोत्ताले दिशश्चुम्बति ।
चन्द्रे चन्द्ररजस्त्विषाञ्चति जगन्निर्याति नीवीगुणे
देवीनां कुसुमानि वर्षति सुरे रासे हरिः क्रीडति ॥ ६ ॥

**उभे**—( **श्रुतिमभिनीय** ) भो भोः पुत्रकाः कीराः ! गीरियं भवतां धीराणामिवास्मद्विधमनोव्यामोहहारिणी जाता । ( परस्परम् ) एहि, निकटविटपान्तरितदेशं प्रविश्य पश्यावः । ( इति कतिचित्पदानि गच्छतः ), ( नेपथ्याभिमुख-मवलोक्य सोल्लासमन्योन्यम् ) पश्य पश्य—

---

१. 'लोक' इति मूले । २. 'याशां' इति मूले । ३. 'तसां' इति मूले अशुद्धः ।
४. मूलपुस्तके 'करण' इत्यसंगतश्छन्दोभङ्गदुष्टश्च । ५. मू० पु० 'करः' इत्यपपाठः ।
६. 'सिंचते' इति मू० पु० अपपाठः ।

व्रजाङ्गनानां नयनोत्पलानां राजन्ति कृष्णे प्रतिबिम्बितानि ।
दिदृक्षुणासां सुषमामनङ्गेनोन्मीलितानीव विलोचनानि ॥ ७ ॥

**अपि च—**

एष भ्राता गोत्रहन्तुः पुरस्ताद्बालक्रीडोन्मूलितक्ष्माधरेन्द्रः ।
इत्यालोच्य स्वेदधाराविरास्ते वक्षोजन्मक्ष्मा[1]धरेष्वङ्गनानाम् ॥ ८ ॥

**अपि च—**

एष क्षोण्यामोषधीनामधीशः पुण्यैर्मन्ये मादृशामेति पूर्णः ।
इत्यौत्सुक्यान्नेत्रपात्रे मुरारेर्वक्त्रे तासां कम्पते गात्रवल्लिः ॥ ९ ॥

**( पुनर्नेपथ्ये कलकलः )**

**उभे—( समाकर्ण्य सोल्लासपुलकमन्योन्यम् )** सखि ! पश्य पश्य—

अधरीकुरुते सुधां रसश्चेद् बहिरेतस्य किमन्तरे तदस्ति ।
इति किं रदनक्षतं प्रियाणामधरान्ते विदधाति नन्दसूनुः ॥ १० ॥

**अपि च—**

कुचकुम्भयोर्मृगदृशां हरिणा नखरक्षतानि रचितान्यभितः ।
लिखितानि मेरुजयिनोर्विजयप्रमिताक्षराणि व[2] पुरा विदुषा ॥ ११ ॥

**( पुनर्निपुणं निभाल्य )** अहो अतिकुतूहलमेतत्—

नृत्यद्भ्रूनयनोत्पलं स्मितमुखं स्विद्यत्कपोलस्थलं
लीलाचञ्चलकुण्डलं भुजलतान्दोलं क्वणत्कङ्कणम् ।
त्रुटयत्कञ्चुकमुल्लसत्कुचतटं तिर्यक्त्रिकं प्रस्खल-
न्नीविव्यञ्जितशिञ्जितं विजयते लास्यं कुरङ्गीदृशाम् ॥ १२ ॥

**अपि च—**

[3]क्वाप्याकुञ्चवदाननं क्वचिदतिस्मेरारविन्दाननं[4]
मन्दस्पन्दिदृगम्बुजं क्वचिदलं दृक्चापलं कुत्रचित् ।
क्वाप्युद्दाममदान्धसिन्धुरगतं कुत्रापि विद्युल्लता-
चाञ्चल्यं हरिणीदृशामिदमहो लास्यं समुज्जृम्भते ॥ १३ ॥

---

१. 'क्षा' इति मूले मकारेण न्यूनः ।
२. 'णीव' पुपा विदुषाः, इति मू० पु०, अत्र इवार्थे 'व' शब्द एवं च न च्छन्दोभङ्गः ।
३. 'कोप्या' इति मू० पु० । ४. 'वनं' इति मू० पु० ।

**अपि च—**

जगदुत्तरमिदं नृत्यकलाकौशलम् । यतः—

वनितायुगलावलितो मधुजिन्मधुजिद्युगलावलिता वनिता ।
असितैर्मणिभिः कनकावलिभिर्मदनेन कृता किमु हारलता ॥ १४ ॥

( **पुनर्निरूप्य** ) सखि ! समाकलय महत्कुतूहलम्—

आलम्ब्योरुतलं वपुः पुलकितं स्विद्यत्कपोलस्थलं
दोस्तम्भं मुरवैरिणातिकुतुकादंसेऽर्पितं बिभ्रती ।
प्रोद्यत्पूर्णकलानिधानरुचिरे स्मेरे मुहुः सीत्कृते
राधेयं निदधाति तेन निहितं ताम्बूलकल्कं मुखे ॥ १५ ॥

( **निपुणं[1] निभाल्य** ) चित्रं चित्रम्—

कल्पितवसुधातल्पाः कल्पलताः कोटिसंख्ययानल्पाः ।
क्लान्तास्तरुणतमालालम्बिन्यः कान्तिशालिन्यः ॥ १६ ॥

तदधुना रतिश्रान्ताभिः कान्ताभिर्विश्रान्तो रासविलासः । यदित एव यमुनावगाहनाय सप्रेयसीकः समायाति, तदितोऽपसरावः ( **इति निष्क्रान्ते** ) ।

( **विष्कम्भकः** )

( **ततः प्रविशति कान्ताकदम्बसंवलितः कृष्णः** )

**कृष्णः—( स्वगतम् )** अहो कान्तानां श्रान्तावपि लोकोत्तरैव कान्तिलहरी ।

अलसमधुव्रतपवनस्फुटकुङ्कुमवाटिकाशोभाम् ।
बिभ्रति विगलितभूषा निश्चलनयनाङ्गयष्टयः सकलाः ॥ १७ ॥

( **प्रकाशं सस्नेहं प्रत्येकम्** ) अयि प्रियतमे !

सुवृत्तमुक्ताप्रतिबिम्बचुम्बिनो विडम्बयन्ती मुकुरस्य सौभगम् ।
रतिश्रमाम्भःकणिकाभिरञ्चिता मुखेन्दुलक्ष्मीस्तव तन्वि लक्ष्यते ॥ १८ ॥

तदागच्छ, कालिन्दीजलावगाहनेन श्रममपनयामः ।

**सर्वाः—( सप्रणयावहित्थम् )—**

तुह करकमलफसं णिविडपरीरंभमहु[2]रमहुपाणं ।
उज्झिअ तिहुअणमज्झे पिअदम किं णो समं हरदु ॥ १९ ॥

---

१. मूले 'निपुणं निपुणं' इति द्विः पाठः प्रमादलेखः । २. 'मुहर'इति मू॰पु॰ पाठः ।

( तव करकमलस्पर्शं निविडपरीरम्भमधरमधुपानम् ।
उज्झित्वा त्रिभुवनमध्ये प्रियतम किं नः श्रमं हरतु ) ॥ १९ ॥

**कृष्णः**—( **सप्रमोदं यमुनाशोभामालोक्य** ) हंहो वल्लभाः ! समाकलयत—

घनजघननितम्बालम्बिकाञ्चीकलापाः
कलममुकुलितनेत्रा वीक्ष्य वः स्मेरवक्त्राः ।
विपुलपुलिनखेलत्सारसासालसाब्जा
विकचकुमुदहासा स्पर्द्धते भानुकन्या ॥ २० ॥

तदेत, त्वरितमेनामवगाह्य जलकेलिसाम्राज्यलक्ष्म्या साक्षादस्यास्पर्द्धामुपमर्दयामः । ( **इति** ) ।

**सर्वाः**—( **सकौतुकम्** ) सुहअ एव्वं णेदं । ( सुभग एवं न्विदम् ) । ( **इति निष्क्रान्ताः** ) ।

**( प्रविश्य सत्वरा )**

**कालिन्दी**—( **सात्मश्लाघम्** ) फलितं किलास्मज्जलमयकलेवरस्यालघुभागधेयेन, यदस्मिन् विलासिनीनिकुरम्बसंवलितविलासलालसः श्रीगोकुलमेदिनीपालतनयः ।

**( नेपथ्ये कलकलः )**

**कालिन्दी**—( **श्रुतिमभिनीय सानन्दं नेपथ्याभिमुखमवलोक्य** )

कलिन्दकन्यासलिलेन संगमाद्
वयं विमुक्ताः सुचिरेण बन्धनात् ।
कचा वधूनामिति तेन बन्धुतां
समाश्रिताः किं कलयन्ति ताण्डवम् ॥ २१ ॥

**अपि च**—

नितम्बिनीनां रसनाकदम्बकै-
र्व्यधायि मौनं यमुनावगाहने ।
गुणप्रथिम्ना परिपूरितान्तरै-
र्जलेषु वक्तुं नहि किञ्चनोचितम् ॥ २२ ॥

**( पुनर्नेपथ्ये )**

वल्लह ! परित्ताहि परित्ताहि । ( वल्लभ ! परित्रायस्व परित्रायस्व ) ।

कलिन्दबालासलिले सलीलहिंसाविलासी किल कालकुण्डली।

**कालिन्दी**—( **ससंभ्रमं नेपथ्याभिमुखमवलोक्य सकौतुकम्** )

इत्यङ्गनाः प्रेक्ष्य तरङ्गमादरात् पुष्णन्ति कृष्णं परिरभ्य निर्भरम् ॥२३॥

( **पुनर्निभाल्य** ) अहो ! महत्कुतूहलम्—

वनान्तदन्तावलकुम्भसंभवा
विलासिनीनां कुचकुम्भपालिताः।
गुणेन मुक्ता विधिनाधुना वयं
वतेति मुक्ताः सलिलान्तरं गताः॥ २४ ॥

( **प्रतीचीमवलोक्य** )प्रायः समाप्तप्रायेयं रजनिरजनि। यतः—

लसज्ज्योत्स्नाभूम्नो ज्वलितहरिता हीरकमयः
सुधाभिर्यः पूर्णो जयति जगतां मङ्गलघटः।
स एवायं चन्द्रश्चरमगिरिचण्डालसुदृशा-
मिदानीं हा धातर्वत परिणतः कांस्यचषकः॥ २५ ॥

**अपि च—**

न कान्तिमन्तिद्युतिमत्तमान्यपि स्वभावतो भान्ति च[1] भानि सांप्रतम्।
वचांसि चित्राण्यपि नन्दनन्दनस्फुरद्यशोराशिकथां विना यथा ॥२६॥

**अपि च—**

रतस्खलद्बन्धनमौक्तिकस्रजा
विराजमानेन मुरारिवक्षसा।
तुलां दधानं विरलोडुसंपदा
निशावसानस्य वियद् विराजते॥ २७ ॥

( **नेपथ्ये कलकलः** )

**कालिन्दी**—( **ससंभ्रमम् आकलयति** ), ( **पुनस्तत्रैव** ) वल्लभ ! परित्रायस्व परित्रायस्व—

प्लुष्टक्षोणीधरत्विट् प्रकटितविकटव्यात्तवक्त्रोग्रदंष्ट्रः
प्रोद्यद्दावाग्निकूटोत्कटकठिनकचश्मश्रुजिह्वाक्षिरन्ध्रः।
स्फूर्जद्दाह्वङ्घ्रियुग्मोद्भटघटननटत्तालवाटीपटीयान्
कुर्वन्नट्टाट्टहासं कटुरटनपटु[2]र्नष्टचेष्टः क एषः॥ २८ ॥

---

१. 'भान्ति भवन्ति' इति मूलपुस्तके। २. मूले 'पटुरिति' नास्ति।

**कालिन्दी**—( **नेपथ्याभिमुखमवलोक्य सत्रासप्रत्यभिज्ञम्** ) निर्णीतमसौ नृशंसः कंससखः शङ्खचूडः । ( **पुनर्निपुणं निभाल्य सखेदम्** )

अहो ! महदौत्पातिकं प्रत्यक्षमेवानुभूयते यल्लक्षसंख्यानि नक्षत्राण्यकस्मान्निपतन्ति वियतः । ( **विमृश्य सानन्दम्** ) अहो ! अतितरां भ्रान्तिरेवेयं गीर्वाणपरम्पराकृतप्रसूनवर्षणेषु, तन्निभालयामि कथमिदमाकस्मिकमिति । (**निपुणं निभाल्य सहर्षम्** ) करकमललीलयैव—

वृत्रो वज्रधरेणेव हरेणेव पुरासुरः ।
तारकः शरजेनेव यक्षोऽयं हरिणा हतः ॥ २९ ॥

( **पुरोऽवलोक्य सवितर्कम्** )

कौसुम्भं वसनं पुरन्दरहरिद्वामभ्रुवः किं नु भो
लक्ष्म्याः केलिवनी जपासुमनसामेतत्किमुज्जृम्भणम् ।
किं लूनस्य तमोद्विपस्य रुधिरं किं दाववह्नेः कुलं
पूर्वाद्रेर्गरुडाग्रजस्य निविडारम्भं किमुद्यन्महः ॥३०॥

( **निरूप्य** )

निश्चितं विरतेयं विभावरी । तदिदानीमासां विलासवतीनामन्योन्यकेलिकथाकर्णनकौतुकेन कर्णपुटमातर्प्पयामि ।

( **इति निष्क्रान्ता:** )

( **ततः प्रविशन्ति यथानिर्दिष्टाः व्रजाङ्गनाः** )

[1]**काचित्**—( **सोत्साहत्रपानौचित्यप्रत्ययम् संस्कृतेन** ) हला प्रियसख्यः ! समाकलयत—

आरब्धे मम चित्रपत्रलिखने हास्याद् वयस्याजनै-
र्दूरीकृत्य शिरोम्बरं स्तनतटादुन्मोचितं कञ्चुकम् ।
तत्राकस्मिकमीक्षितः स्मितमुखो नीवीगुणेन च्युतां
मां पापां बत गोकुलेन्द्रतनयो हा धिक् कथं ज्ञातवान् ॥३१॥

**सख्यः**—तथैव ।

रूपामृतं तव वरोरु निपीय कान्तं
पूर्णान्तरः स खलु गोकुलराजसूनुः ।
तल्लेश ; एष वदनामृतरश्मिविम्वा-
त्किं वा बहिर्भवति[2] नु स्मितकैतवेन ॥ ३२ ॥

---

१. 'काश्चित्' इति मूले । २. 'भवतु न' इति मू० पु० पाठः ।

**अपरा**—( **सरोमाञ्चस्मितापत्रपम्** )—

जलक्रीडावेशाद्गलितवसनां प्रेयसि हस-
त्यहं ह्री[1]णालीना नलिनवनमासाद्य सहसा।
मुखभ्रान्त्या पश्चाद् विकचनलिनं चुम्बितवता
हसन्त्या वैल[2]क्ष्यं मम सपदि तेनैव निहतम् ॥ ३३ ॥

**अन्या**—( **सप्रेमजडिमाविष्करणम्** )—

कूजत्काञ्चिनिनादिनूपुरमियं नालंकृता पद्धति-
र्जृम्भारम्भलसन्मुखं भुजयुगं नैवोद्ध्वर्वमुद्धूनितम्।
वातावर्तितनर्तितार्यनयनं नालोकितं सस्मितं
चित्रन्यस्ततया स्थितं सखि मया स्मेरे पुरः प्रेयसि ॥ ३४ ॥

**इतरा**—( **सरसोत्तारल्यम्** )—

मृषा स्वापे कान्ते मृदुमृदुपदन्यासमगमं
तदङ्कादाहर्तुं नमिततनुवल्लिर्मुरलिकाम्।
अथोन्मीलन्नेत्रस्मितवदनमेतेन विहितं
यदस्यां कस्तस्मिन् प्रभवतु विशेषस्य कथने ॥ ३५ ॥

**अन्या**—( **सप्रेमप्रमोदनिगूढाहंकरणम्** )—

अभेदः प्राणानां तव मम च यादृग् वरतनो!
तनोरप्येतादृङ् न कथमिति वाचि प्रियतमे।
तथा चेत्त्वान्योन्यस्मितवदनशोभेक्षणसुखं
मयेति प्रोक्ते तन्मुखविभुमहः किं[3] नु तुलयेत् ॥ ३६ ॥

**राधा**—( **सान्तःप्रमोदस्मितसंव[4]रणाकूतसमञ्जसप्रत्ययम्** )—

दृशोः कोणं शोणं श्रुतिनिहितरक्तोत्पलरुचा
भ्रमद्भृङ्गश्रेणीभयविवलितं दन्तवसनम्।
ह्रिया नम्रं ताम्रं मुखमलिकसिन्दूरमहसा
समीक्ष्य प्राणेशः सखि मम पदे हन्त लुठति ॥ ३७ ॥

**कामकला**—( **जनान्तिकं सप्रणयरोषम्** ) अयि माणंसिणी सव्वसाअ-माणमाणाणादरणकारिणि! सरले चंदाअलि! सुणेहि, पेक्खं दावमाणसोहग्गं

---

१. मूले 'ह्रीना' इत्यशुद्धः। २. मूले 'वैलक्षं' इति।
३. 'किं कु' इति मूले। ४. 'संवरा' इति मूले पाठः।

कमलिनीए[1] । (अयि मनस्विनी सर्वस्वायमानमानानादरणकारिणि ! सरले चन्द्रावलि ! शृणु, प्रेक्ष्य तावन्मानसौभाग्यं कमलिन्याः ) । ( **इति संस्कृतेन** )—

प्रतीच्यामासक्तं सपदि निजकान्तं कमलिनी
विलोक्यान्तर्दूनाकमलवदनं मुद्रितवती ।
यदस्राक्षीदस्रं निशि हिममिषेणाम्बुमिलितं
प्रतिच्छायः प्रातस्तदिह पदमूले लुठति सः ॥ ३८ ॥

**चन्द्रावली—( सस्मितं संस्कृतेन )** अयि किमतिकोपाटोपेन । यतः—

निर्बन्धेन मनोभवस्य कृतिनस्तन्त्रं विचार्याविलं[2]
मानः प्रेयसिनिर्मितोऽस्य बहुशः कातर्यमुद्वीक्षितुम् ।
स द्रागेव दरेक्षितस्मितरुचा तेनैव संचूर्णित-
ष्टङ्कः सुन्दरि कल्पितोद्रिखनने पङ्के विशीर्णो मम ॥ ३९ ॥

**अपि च—**

निर्बन्धेन विमुद्रिते अपि दृशौ तिर्यक् तमुत्पश्यत-
स्तस्मिन्नम्बरमाहरत्यवशतां यातः करौ कम्पतः ।
नेत्युक्ति विरुणद्धि हन्त हसितं वाञ्छाम्युरोजावृति
नीवी स्रंसति नन्दजे सखि वृथा मा मान शिक्षां कृथाः ॥४०॥

**( इति सर्वाः सौत्सुक्यमन्योन्यं स्व-स्वसौभाग्यमुपवर्णयन्ति )**

**( नेपथ्ये )**

भो भो सखायः श्रीदामप्रमुखाः ! सज्जीभवन्तु गोचारणाय । ( **पुरस्तान्मुरलीमापूरयन् गोकुलेन्द्रनन्दनः समायाति** ) ।

**गोप्यः सर्वाः—( श्रुतिमभिनीय सप्रमोदचमत्कारं नेपथ्याभिमुखमवलोक्य परस्परम्)** हला सहीओ ! दूधज्जेव सह सहअरेहिं समाअच्छदि सप्पमोअं गोउलिंदणंदणो, ता इदो अण्णदो गच्छम्म । ( हला सख्यः ! इत एव सह सहचरैः समागच्छति सप्रमोदं गोकुलेन्द्रनन्दनः, तदितोऽन्यतो गच्छामः ) । ( **इति निष्क्रान्ताः** ) ।

---

१. 'मोई ए' इति मूले ।

२. अत्र 'विचार्याप्यलं' इति पाठो युक्तः प्रतिभाति । अथवा आ सम्यम् विलं भेदकम् इत्यर्थः । 'विल भेदने' तु० प० से०, इगुपधेति कः । तथा च सम्यग्भेदनीतिप्रवणम् इति गूढार्थः । एवमपि मूलपाठः समर्थयितुं शक्यते ।

( ततः प्रविशति यथानिर्दिष्टः श्रीकृष्णः )

**श्रीकृष्णः—**

स्वेदाम्भोभिः पुलकपटलीमण्डितां गण्डपाली-
मासिञ्चन्त्यः सरसविकसत्पुण्डरीकाक्षिलक्ष्म्याः ।
किं वान्योन्यं मधुरमधुरं स्मेरवक्त्रेन्दुबिम्बा-
श्चञ्चद्बिम्बाधरपुटमु[1]खैरुद्गिरन्ति स्म कान्ताः ॥ ४१ ॥

यदमी मणिपञ्जरोदरवर्तिनः कीरास्तामेवातिमञ्जुलां वर्णावलीमभ्यस्यन्ति, तदेवं वितर्कयामि । साम्प्रतमेव—

दूरादेव हि संकलय्य मुरलीनादान्मदीयागमं
चाञ्चल्येन दृशोरलं कुवलयैरुल्लासिनीभिर्दिशा[2]म् ।
निर्बन्धात्करुद्धनीविविगलद्धम्मिल्लमल्लिस्खल-
न्मुक्तावल्लिगलच्छिरोम्बरमहं बालाभिरालोकितः ॥४२॥

यदस्तव्यस्तं वलितानां कुन्तलकलापस्खलितानि कुसुमानि स्तनपालिविमुक्तानि मुक्ताफलानि च भूमीतलं विभूषयन्ति ।

**भद्रमुखः**—( **ससंभ्रमप्रणयम्** ) वअस्स बहुधा कामरुअधराओ नत्तंचरीओ संचरंति भवन्तमवहंतुं ता एदाणं वाहारववहारा करिसिदो कदंमाजामाजाहि । एहि गोचारणत्थं गच्छम्ह जाणं दधिदुद्धादीहिं जीविदं अम्हाणं । ( वयस्य ! बहुधा कामरूपधरा नक्तंचर्यः संचरन्ति भवन्तमवहन्तुम्, तदेतासां व्याहारव्यवहाराकर्षितः कदम्बच्छायामायाहि । एहि गोचारणार्थं गच्छेम, येन दधिदुग्धादिभिर्जीवितमस्माकम् ) । ( **इति करे गृहीत्वाऽन्यतो नयति** ) ।

**श्रीदामा**—( **गोष्ठं निवर्ण्य सकौतुकम्** ) सखे ! पश्य पश्य—

स्तब्धप्राणश्रवणनयनं त्वन्मुखेन्दोरमन्दां
पायं पायं द्युतिमनुपदं मोदमाना न दन्त्यः ।
गावश्चन्द्रोपलकुलवलत्कान्तयः प्रोच्छलन्त्यः
क्षीराम्भोधेः किमिह सुषमां संहृताः शीलयन्ति ॥ ४३ ॥

**भद्रमुखः**—( **संस्कृतेन** ) वयस्य ! पश्य पश्य—

---

१. 'महैवो' इति मू० पु० ।
२. 'दृशाम्' इति मू० पु० पाठः ।

हैयङ्गवीनपङ्कस्तूपाशङ्कावहैरङ्गैः ।
यच्छन्त्युदास्यपुच्छान् मोदम[1]मन्दं दृशोरमी वत्साः ॥ ४४ ॥

**सखायः**—( **सहासम्** ) सखे ! प्रायशस्तत एव भवतो महानन्दतोदङ्क-संप्लवः ।

**कृष्णः**--प्रियसहचराः ! समाकलयत—

स्वच्छ[2]स्निग्धस्फटिकशिखरभ्राजमानैः ककुद्भिः
शृङ्गैरङ्गीकृतमरकतोद्भेदरूपैरुपेताः ।
अङ्गैस्तुङ्गैस्तुहिनकिरणास्कन्दिभिः किं न्वभिख्या-
मुक्षाणोऽमी हिमशिखरिणः सर्व्वशः खर्व्वयन्ति ॥ ४५ ॥

तदेतद्गोवृन्दं कालिन्द्यामम्भः पाययित्वा वृन्दावनं संचारयामः । ( **इति तथाकरोति** ) ।

( **नेपथ्ये कलकलः** )

**सर्वे**—( **ससंभ्रमं निरूप्य** ) अहो कष्टं कष्टं महानयमुत्पातः समापतितः ।

कुहूध्वान्ताकारस्त्रिभुवनजनान्धंकरणरुक्
ककुद्वृद्धया विन्ध्याचलमहिमवन्ध्यत्वकरणः ।
खुरक्षेपैः क्षुण्वन् क्षितिमथ दिवं शृङ्गनटनै—
र्महोक्षः कः साक्षात्क्षयकृदिह रक्षोऽक्षिविषयः ॥ ४६ ॥

**कृष्णः**—हंहो वयस्याः ! कंसानुशिष्टो दुष्टात्मायमरिष्टो भवेत्, तदेनं शमनसदनं प्रस्थाप्य यावदहं समागच्छामि तावदिहैव निरातङ्कं गाश्चारयन्तु भवन्तः । ( **इति सत्वरं निष्क्रान्तः** ) ।

**सर्वे**—( **नेपथ्याभिमुखमवलोक्य सोल्लासकौतुकम्** )

घर्माम्बुविन्दुभिरलंकृतशोणिमाक्षि
लक्ष्म्या चलालककुलेन मृदुस्मितेन ।
आनन्दयन् व्रजभुवः स्तुवतश्च देवान्
कृष्णः समीक्षणसुधोक्षणकृत्समेति ॥ ४७ ॥

( **ततः प्रविशति यथानिर्दिष्टः श्रीकृष्णः** )

**कृष्णः**—हंहो वयस्याः ! स्वपापेनैव निहतोऽयं दुष्टतमोरिष्टः ।

---

१. 'मनुत्थं' इति मूले पाठः । २. मूले तु 'स्वच्छाऽत्यस्य स्फटिकशिखरभ्रमरभ्राज-मानैः' इत्यत्युच्छृङ्खलं लिखितम् ।

**सखायः**—( **सानन्दं कृष्णमालिङ्ग्य** ) सखे ! योग्यमेतत् सिंहास्कन्दनायोद्यतस्य ग्रामसिंहस्य । तदेहि कालिन्दीपुलिनशोभां निभालयामः ।

( **नेपथ्ये** )

विदधदघनिहन्तुः प्रेमपूरे निमग्नं
भुवनमलघुवीणोन्नीतगीतामृतेन ।
निबिडतमजटाभिः स्निग्धविद्युच्छटाभि-
र्नटति किमु पयोदः शारदो नारदोऽयम् ॥ ४८ ॥

**सर्वे**—( **श्रुतिमभिनीय सोल्लासम्** ) सखे श्रीकृष्ण ! समाकलितं यदाह वनदेवता, यद्भवन्तं दिदृक्षुर्नारदः समायाति ।

**कृष्णः**—भोः सखायः ! सम्यग् ब्रूत । ( **इति सश्लाघं पश्यति** ) ।

( **ततः प्रविशति यथानिर्दिष्टो नारदः** )

**नारदः**—( **स्वगतम्** )—

चेतश्चकोरचुलुकय गोकुलचन्द्रास्यचन्द्रिकानिचयम् ।
रसयसि किं न रसज्ञे सुज्ञे संज्ञा सुधां तस्य ॥ ४९ ॥

( **इतस्ततोऽवलोक्य** )

एते गोपालबालका एव सफलजन्मानः । यतः—

तेनैव जगति जातं कृष्णसतृष्णं मनो यस्य ।
जननीजठरप्रकटितविट्कीटैः किं न वाऽन्यथाजातम् ? ॥५०॥

( **पुनरन्यतोऽवलोक्य** ) कथमासां सौभाग्यातिशयः शक्यो वर्णयितुम् ? याभिः—

अवलोकितमनुहसितं तदनु च नतवीक्षितं किमपि ।
एतावतैव निगडितमाभीरीभिः परं ब्रह्म ॥ ५१ ॥

( **पुरो भगवन्तमवलोक्य सपुलकोत्कम्पगद्गदवाक्यम्** ) भगवन्ननुगतमेनं परित्रायस्व । ( **इति पादयोः पतति** ) ।

**कृष्णः**—( **सविनयम्** ) प्रभो कृपासंवलितावलोकितशुभानुध्यानसंवर्द्धनीयेषु जनेषु किमर्थमिदमसमञ्जसमाचरसि ?

**नारदः**—जगत्प्रपञ्चक[1]वञ्चनावनीपञ्चानन ! किमतितुच्छस्य मादृशः प्रोत्साहनेन । ( **इत्यञ्जलिं बद्ध्वा सकौतुकस्मितम्** )—

कृत्वा कालियदन्दशूकदमनं त्वय्यास्थिते ताण्डवं
तस्योत्तब्धसमस्तमस्तकमणिद्योते समुत्तस्थुषि ।
येनालम्भि विभातभास्करकरप्राग्भारशोभास्फुरद्
रक्ताम्भोजयुगद्युतिः प्रतिपदं तत्तेऽङ्घ्रियुग्मं भजे ॥ ५२ ॥

**अपि च**—

लुब्धस्येव सुवर्णं स्मरविवशस्येव सुन्दरी नर्म ।
क्षुधितस्येव सदन्नं माधव तव नाम मे भूयात् ॥ ५३ ॥

( **इति चरणमूले लुठति** )

**कृष्णः**—( **ससंभ्रमं कराभ्यामुत्थापयति** ) ( **आकाशे परस्परं** )—

स्फूर्जन्तस्तपसा पुलस्त्यपुलहागस्त्यात्रिदुर्वाससः
सन्तूच्चैर्यशसः परेऽपि मुनयो धन्यः परं नारदः ।
यस्य श्रीव्रजनन्दनन्दनगुणोत्कीर्तिप्रसङ्गे मुहुः
प्रालेयाद्रिविनिस्सृतामरधुनी धारायते स्रावलिः ॥ ५४ ॥

( **नेपथ्ये कलकलः** )

**सर्वे**—( **संभ्रमं नाटयन्ति** ) ।

**नारदः**—भगवन् ! प्रपन्नभयभञ्जन ! पुरस्तादस्ताशङ्कं संगतादस्मान् केशिनस्त्रस्तानेतांस्त्रायस्व ।

**कृष्णः**—भगवन् ! कीदृशोऽसौ ?

**नारदः**—( **सकौतुकम्** )

नीलाद्रिं स्पर्धमानो द्युतिभिरुपहसंश्चण्डवेगाद[2]काण्डं
भिन्दन् ब्रह्माण्डभाण्डं प्रलयघनघनध्वानजिद्धेषितेन ।
कुर्वन्नुर्व्याः प्रपीडां खरखुरखननैर्बालधिस्कन्धवालै-
र्व्याधुन्वन्स्वर्गिवर्गं तुरगवरवपुर्भ्रमीत्येष केशी ॥ ५५ ॥

**कृष्णः**—भगवन् ! क्षणमिहैव मां प्रतीक्षस्व । यावदेनं दुरात्मानमन्तकान्तिकं प्रेषयामि । ( **इति सत्वरं साटोपं निष्क्रान्तः** ) ।

---

१. मू० पु० 'जगत्प्रपंच' इत्येव पाठः ।

२. 'चण्डवेगेन काण्डम्' इति मूलपाठोऽसंगतः ।

( नेपथ्ये )

किं गर्वमुद्वहसि दुर्बलदैत्यगर्वं हत्वा हरे कपटनाटकसूत्रधार ।
यन्मृत्युरेष युधि सर्वसुपर्वदूर्वा पर्वैकचर्वणपरोऽर्ववपुः समीपे ॥ ५६ ॥

**सर्वे**—( **श्रुतिमभिनीय सकम्पम्** ) भगवन् देवर्षे ! कस्येयं साटोपवचनरचनारभटी ।

**नारदः**—एष तावत्कं सानुचराणां खेचराणां स्वपक्षविजयदिदृक्षयोत्कण्ठितानां कण्ठाडम्बरः । ( **पुनर्नेपथ्ये** ) अरे रे दुरात्मानः !

सत्यमर्व्ववपुषोऽस्य समीपे मृत्युरेष भवतामपि दैत्याः ।
सत्त्वरं तदमुनैव समेताः संयमिन्यतिथितामथ यात ॥ ५७ ॥

**सर्वे**—( **सोल्लासम्** ) भगवन् ! समाकलितम्, यदुक्तं प्रियवयस्येन ?

**नारदः**—अथ किम् ?

( **पुनस्तत्रैव कलकलः** )

**सर्वे**—( **ससाध्वसम्** ) भगवन् ! निरूप्यतां किमाचरति केशवः केशी च ।

**नारदः**—( **निरूप्य** ) सकलगोकुलमत्तुकामो मृत्युरिव व्यात्तमुखः कृष्णाभिमुखमायाति केशी । केशवस्तु तदसूनां ग्रसनाय निजभुजभुजङ्गमेवोज्जागरयति । ( **निपुणं निभाल्य श्रीकृष्णभुजं प्रति सोल्लासम्** ) साधु—

भो भो हस्त ! निरस्तदूषणविभो यस्त्वं जगत्प्राणभृद्
भोगित्वं भवतस्ततः कृतधियः शंसन्ति निःसंशयम् ।
ब्रूमस्त्वां तदिदं हिताय जगतो दुष्टात्मनः केशिनो
व्यात्तास्याम्बरतः प्रविश्य जठरं प्राणाशुगान् संहर ॥ ५८ ॥

( **पुनर्नेपथ्ये दुन्दुभिध्वनिः** )

**नारदः**—( **सोल्लासम्** ) संयमिनीं प्राप्तोऽयम् । यदिह गतासोः केशिनस्तुण्डाद्वहिर्भवन् पुण्डरीकेक्षणस्य भुजदण्डः प्रोद्दण्डगिरिकन्दरातः स्यन्दमानकालिन्दीप्रवाहसुषमामास्कन्दति । भो भोः ! समाकलयन्तु स्मेराननं केशिनिषूदनं पुरतः । ( **इति सस्पृहं सर्वे विलोकयन्ति** ) ।

( **ततः प्रविशति यथानिर्दिष्टः श्रीकृष्णः** )

**श्रीकृष्णः**—भगवन् देवर्षे ! भवत एव रोषकलुषितेन विलोकितेनासौ निषूदितो महासुरः ।

**भद्रमुखः**— वअस्स कण्ह ! अण्णधज्जेव णिरूविदं तुमए । एदाणं सिण्ण-पण्णपवणाहारदुब्बलाणं कुदो एदादिसं समत्थत्तणं । दहिदुग्घघिदखंडलड्डुअ-प्रभोइणा मईज्जेव अअं व्वावादित्तेत्ति जाणेहि । अण्णधा कधं कुसुमं वरिसंतेहिं पुरुहूद पहुदिएहिं भद्दं भद्दंत्ति मंणामज्जेव उदीरितं । ( वयस्य कृष्ण ! अन्यथैव निरूपितं त्वया । एतेषां शीर्णपर्णपवनाहारदुर्बलानां कुत एतादृशं समर्थत्वम् । दधिदुग्धघृतखण्डलड्डूकप्रभोजिना मयैवायं व्यापादित इति जानीहि, अन्यथा कथं कुसुमानि वर्षद्भिः पुरुहूतप्रभृतिभिर्भद्रं भद्रम् इति मन्नामैवोदीरितम् ? ) ।

**सर्वे**—( **सहासम्** ) भद्रमुख ! साधु, भवतैवायं व्यापादितः । ( **इति हसन्ति** ) । ( **नेपथ्ये** ) हंहो विमानचारिणः ! किं जानीत क्वास्ते भगवान् कमलजन्मनो हृदयानन्दनो नारदः ? यथानिदेशं वयमपि गृहीतभूमिकाः ।

**कृष्णः**— भगवन् देवर्षे ! किमेतत् ?

**नारदः**—(**साकूतस्मितम्** ) भगवन् !

नानारूपरसोल्लासि विचित्रं कर्मचित्रवत् ।
नाट्येनो[1]द्घाटयिष्यामि भविष्य[2]त्तव केशव ! ॥ ५९ ॥

तत्संपादनाय मयैवामी नियोजिता रङ्गविद्यापारङ्गमाः । तच्चेद् भवते रोचते, तदा ज्ञापयस्व तत्संघटनाय ।

**कृष्णः**—( **सकौतुकम्** ) भगवन् देवर्षे ! अस्मदभिलषितमेव भवन्तो याचन्ते ।

**नारदः**—भवतु भगवन् तथैव करवाणीति । ( **सप्रमोदं निष्क्रान्तः** ) ।

**कृष्णः**—हंहो वयस्याः ! चलन्तु सम्प्रति सदनं प्रति । वयमपि सर्वे नृत्यदर्शनाय सज्जीभवामः । ( **इति निष्क्रान्ताः सर्वे** ) ।

**॥ इति केशिविनाशो नाम षष्ठोऽङ्कः ॥**

●

---

१. 'नाट्यं नो' इति मू० पु० ।
२. 'भविष्यं' इति मू० पु० ।

## ॥ अथ सप्तमोऽङ्कः ॥

( ततः प्रविशति विमानस्थः सुदर्शनः कान्तिमती च )

**सुदर्शनः**—( **परितोऽवलोक्य सरोमाञ्चम्** ) अस्मिन्नेव वृन्दावने—

पुराऽङ्गिरः शापवशादशङ्कं भुजङ्गमं मां कृपया मुकुन्दः।
अमोचयत्तद्वपुषोऽतिमन्दान्नन्दं च मद्दंशनलब्धमृत्योः ॥ १ ॥

( **इति सबहुमानं प्रणमति** )

**कान्तिमती**—( **सकषायस्मितम्, संस्कृतेन** ) मानद ! किमिदं ? कथय तावत्—

घूर्णन्नयनाम्भोजं जृम्भासंभावितं मुखं भवतः।
अलसतमं सकलाङ्गं व्यक्तं ब्रूते प्रजागरं नक्तम् ॥ २ ॥

**सुदर्शनः**—( **सप्रणयविनयम्** ) प्रियतमे ! समाकलय। समस्तवृन्दारक-वृन्दसहितस्य पुरन्दरस्य पुरस्तान्महत् कौतूहलमनुभूतम्।

**कान्तिमती**—( **सौत्सुक्यम्** ) नाथ ! कीदृशं तत् ?

**सुदर्शनः**—भवत्यामत्यर्थमधुपानादसंवित्तिस्वापवत्यां प्रजागराय विरचितबहुप्रकारायासेन विचित्रवादित्रघोषाकर्षितचेतस्तया मया भवतीं विनैव भवनात्प्रस्थितम्। तत्र तावद्विदग्धवर्गप्रथमेन चित्ररथेन गन्धर्वराजेन उर्वशीपुरस्सराभिरप्सरोभिः समं तत्रभवतः शतपत्रजन्मपुत्रस्य श्रीनारदस्य कृतं मदनविनोदनं नाम नाटकमभिनीतम्, यस्मिन् करतलमिलितामलमुक्ताफलमिव सकलं कुसुमशरकेलिविलसितं गोकुलभूमिपालतनयस्य भगवतो रतिचातुरीप्रवीणासु नवीनासु गोपवामनयनासु तासां च तस्मिन्ननुपदमुपपादितम्।

**कान्तिमती**—इदं साक्षादेव वीक्षितं राधिकापुरोगमाभिः समं भगवति विहरति विमानचारिणीभिरस्माभिः। ( **सकुतूहलस्मितसंवरणम्** ) सुभग ! किमपि जिज्ञासितुं समुल्लसितास्मि। यतः—

अपृष्टे संशयात्कष्टं प्रष्टुं त्वत्तो बिभेम्यहम्।
प्रश्नाप्रश्नविकल्पाभ्यां तृतीयं कष्टमागतम् ॥ ३ ॥

**सुदर्शनः**—( **तन्मुखमहः समीक्ष्य स्वगतम्** ) प्रायशः किमप्यसंबद्धमस्या हृदयमास्कन्दति। मन्दबुद्धिता हि वामानामनागन्तुकी। भवतु तावत्, (**प्रकाशम्**) भामिनि! भीरुता तावद् भवतीनां स्वाभाविकी; तथापि शंस निःसाध्वसम्।

**कान्तिमती**—( **साकुञ्चनस्मितम्** ) नायक! तावद् धीरधुरन्धरेण तेन वीतरागेण मदनविनोदनं[1] नाम नाटकं प्रकटीकृतम्। कथं चाशैशवाद्[2] विषवद् विषयसुखमनङ्गीकुर्वता आभीरकुरङ्गीदृशामानङ्गीविलसितिः साङ्गोपाङ्गं निरणायि। न ह्यनास्वादितकर्पूरस्य कदाचिदास्यादाविर्भवति तद्गन्धानुबन्धीगन्धवाहः।

**सुदर्शनः**— ( **सकौतुकहासम्** ) मुग्धे! वुध्यस्व, भगवतः श्रीकृष्णस्य प्रेमगरिमविलसितमेतत्। तथाहि—

धीरैकधीरोऽपि मुकुन्दभक्त्या
रसोपचित्योत्तरलो न[3] चित्रम्।
किमिन्दुकान्त्या वलितोऽम्वुराशि-
र्गाम्भीर्यसारोऽपि बिभर्ति धैर्यम्? ॥ ४ ॥

**अपि च**—

कुमुदं विमुदं[4] कुरुते तमः समस्तं सदोषमस्तमयम्[5]।
भासयते भुवनगतं भक्तिर्विष्णोर्गभस्तिरिव भानोः ॥ ५ ॥

**अपि च**—

प्रभवति कृष्णप्रेमा प्रागेवोन्मथ्य सकलमज्ञानम्।
प्राचीनाचलशिखरं चुम्बति चन्द्रोऽनुदस्य किं तिमिरम्? ॥ ६ ॥

( **सकषायहासम्** ) अयि विद्वन्मन्ये! किमन्यत्कथनेन। किमेवमाशङ्कमाना शुकदेवमेव नाकलयति भवती। यदिह—

पारिव्राज्यं परिप्राप्तं वेदान्ताः परिशीलिताः।
तथाप्यसौ हरेर्लीला शुकेन प्रकटीकृता ॥ ७ ॥

---

१. मूले 'नटविनोदकं' इति पाठो न सम्यक्, सन्दर्भविरोधात्।

२. मूले 'सैशवं विषत्' इत्यशुद्धस्त्रुटितश्च पाठो लेखकप्रमादात्।

३. 'लोल' इति मूले।

४. मूले 'विमदं' इति पाठः। ५. मूले 'अस्तमयते' इति सदोषः पाठः।

**कान्तिमती**—( **स्वगतम्** ) समुचित एवासौ मयि रोषावेशः ( **प्रकाशम्** ) ( **सभयविनयम्** ) प्राणेश ! किमतिशेषेण कियान्विवेकोऽस्माकं शास्त्राचार[1]-विवेकविधुराणां स्त्रीणाम् । अपि च—

त्वं पीडितोऽपि निबिडं कुरुषे रसज्ञा-
मोदं यदिक्षुवदिदं न च ते विचित्रम् ।
क्लान्तोऽपि कोकिलयुवाकलकूजितेन
लोकस्य कर्णकुहरे मुदमादधाति ॥ ८ ॥

( **इति कम्पमाना पादयोर्निपतति** )

**सुदर्शनः**—( **सान्तःप्र[2]मोदम्, कराभ्यामुत्थाप्याङ्कमानीय समालिङ्ग्य** ) प्रिये ! क्व रोषस्य संभावनापि प्रायशः सुनिश्चितार्थसुदृढीकरणाय पुनः पुनरुद्धृत्य स्थूणानिखननन्यायेनैतदाशङ्कितं भवत्या ।

**कान्तिमती**—( **परितः सकुतूहलं गोकुलमवलोक्य** )नाथ ! कथमाकुमारममी व्रजवासिनो विकसद्वदनसरोजाः साम्प्रतमतीव प्रतीयन्ते ।

**सुदर्शनः**—समाकर्णय वरवर्णिनि ! कर्णपुटकपेयपीयूषमेवैतत् । तस्यैव तावद् भगवतो नारदस्य प्रणीतं 'कंसविध्वंसनम्' नाम नाटकं भगवतः श्रीकृष्णस्य पुरस्तादभिनेष्यन्ति । यस्मिन्नत्र भगवान् भरतः सूत्रधारः, पारिपार्श्विको वात्स्यायनः, बादरायणो गान्दिनीनन्दनः, भगवन्तावसितदेवलौ रामकृष्णौ, पुरन्दराद्यावृन्दारका गोपार्भकाः, स्वर्गविलासिन्यो गोपरमण्यः, कश्यपादिती, नन्दयशोदे वसुदेवदेवक्यौ च, महर्षिरष्टावक्रो विदूषकः, तुम्बुरुप्रभृतयो गन्धर्वा गायकाः वादकाश्च, प्रमथयूथपतयश्च यथायोग्यं कंसादयः ।

**कान्तिमती**—(**साश्चर्यम्**) प्रियतम ! कथमतिकुवेशाभ्यां तपसा कृशाभ्यामसितदेवलाभ्यां रामकेशवयोरसमातिशयसुषमातिशयशालिनोः सदृशता स्वीकार्या ?

**सुदर्शनः**—(**सस्मितम्**) प्रिये ! भगवतः कृपायाः किमशक्यम् ? तथाहि—

यदुपरि कृपाकटाक्षः प्रसरति कृष्णस्य लक्ष्यते स गुणैः ।
रज्यति रमणो यस्यां यस्यां सैवेह जायते सुभगा ॥ ९ ॥

---

१. मूले 'शास्त्राचार्य' इति पाठो न संगतः ।
२. 'शान्तप्रमोदं' इति मू० पु० पाठोऽसंगतः ।

**अपि च—**

यं कमपीह मुरारेः प्रेमा कुरुते महत्तमं सद्यः।
स्पर्शोपलसंपर्कात्स्वर्णत्त्वं किं न लोहस्य ?॥ १०॥

**कान्तिमती—**( **परितोऽवलोक्य** ) सुभग ! प्रायश संनिहितोऽयं नृत्यारम्भसमयः। यदिह मलयजजम्बालविलेपिता सकलैव गोकुलभूमिः समुल्लसति।

**सुदर्शनः—**( **सस्मितं विलोक्य** )सम्यगाह भवती। यतः—

पृथुतरचतुरस्राऽत्युन्नता स्वर्णवेदी
मृदुभिरतिमहार्घैराङ्कवैरङ्क्यमाना ।
तदुपरि वहुरत्नभ्राजि सिंहासनश्री-
स्तिरयति मिहिरस्य प्राप्तमेरोर्विभूतिम् ॥ ११ ॥

इय[1]मेवं तदितोऽदूरवर्तिन्यपराप्येवं प्रायो भगवतो वलदेवस्योपवेशनाय।

**अपि च—**

कलय कमलरागस्तम्भमालावलम्वी
गगननगरचुम्वी द्योतमानो वितानः।
इह दिशि दिशि सक्तादन्तिमुक्तात्रतत्यः
शरदि मुदिरमुक्ता वारिधारास्तुदन्ति ॥ १२ ॥

**अपि च—**

मन्दस्पन्दनमरुता तरलपताकाच्छलेनैताः ।
विदधति हरितः सेवां नन्दकिशोरस्य चामरव्यजनैः ॥ १३ ॥

( **नेपथ्ये कलकलः** )

**उभौ—**( **श्रुतिमभिनीय नेपथ्याभिमुखमवलोक्य सानन्दमन्योन्यम्** ) प्रायो नृत्यदर्शनसाभिलाषः समायाति भगवान् नन्दनन्दनः। यदमी मणिमयवेत्रपाणयः श्रीदामसुदामादयः परितः प्रसर्प्पतो लोकान्निवारयन्ति, तदावामपि भूमिकाग्रहणभूमीमनुसरावः। ( **इति निष्क्रान्तौ** )।

( **विष्कम्भकः** )

( **ततः प्रविशति यथानिर्दिष्टः श्रीकृष्णः परितो राधिकाद्याः प्रेयस्यो विभवतः परिवाराश्च** )

---

१. 'इयमेव तदमी दूरवर्तिन्यपराप्येवं' इति मू० पु०।

**कृष्णः**—( **सविनयाकुञ्चनम्**) सखे श्रीदामन् ! किमित्या[१]र्यचरणाः प्रलम्ब-वैरिणो विलम्बन्ते ।

**श्रीदामा**—(**सत्वरं निरूप्य**) सखे ! समायान्त्येवामी सपरिवाराः । (**इति सर्वे ससंभ्रमम् उत्ति**[२]**ष्ठन्ति** ) ।

**( ततः प्रविशति बलदेवः )**

**बलदेवः**—वत्स ! इमं नृत्यसमारम्भं तातचरणा गोचरणीयाः ।

**कृष्णः**—आ[३]र्य ! विज्ञापिताः प्रत्युत्तरितवन्तः भवद्भ्यामेवावलोकनीय-मेतत् ।

**बलभद्रः**—प्रायशो गोपवृद्धैः सार्द्धं दिनान्तरेऽवलोकयिष्यन्ति । समुचितं चोक्तवन्तः ।

अपत्यस्य हि संपत्तिः पितुः संपत्तिरुन्नता ।
यदिन्दोरुदयः सिन्धोरुदयः संप्रतीयते ॥ १४ ॥

**( इत्युभौ यथास्थानमुपविशतः । तयोः परिवाराश्च )**

**कृष्णः**—सखे सुदामन् ! समीक्ष्यताम्—

रत्नसिंहासनासीनः प्रलम्बासुरसूदनः ।
उद्गच्छन्तं भानुमन्तमारूढश्चन्द्रमा इव ॥ १५ ॥

**बलभद्रः**—वत्स कृष्ण ! विचार्यताम् कथममी न त्वरयन्ति ।

**( नेपथ्ये वाद्यध्वनिः । सर्वे श्रुतिमभिनीय हर्षं नाटयन्ति )**

**सूत्रधारः**—( **प्रविश्य** )—

धम्मिल्ले नवमल्लितां परिलसत्कर्पूरतां चाधरे
कण्ठे मौक्तिकदामतां स्तनतटे पाटीरपङ्कात्मताम् ।
रोमालीबलदब्जवल्लिविसतां नाभीह्रदान्तर्भजत्
कान्तायाः किलकिञ्चिते स्मितमहः कृष्णस्य पुष्णातु वः ॥१६॥

**अपि च**—

पर्यायेण विना पदाम्बुजमथो मूर्द्धानमालम्बितुं
स्वर्धुन्याः सुरतोत्सवेऽब्धिदुहितुः शैलेन्द्रपुत्र्यास्तथा ।
पक्षीन्द्रस्य वृषाधिपस्य च गतिप्रारम्भसंभावने
वैयग्र्यं शिवमादधातु गिरिशेनैक्ये मुरद्वेषिणः ॥ १७ ॥

१. 'आचार्यं' इति मूले । २. मूले 'इति सर्वे ससम्भ्रमम्' इत्येतावदेवास्ति ।
३. 'आचार्यं' इति मूले ।

**अपि च—**

आभीरीहृत्कुमुदपरिषन्माधुरीदृक् चकोरी
साधुश्रेणी सरसिजवनी देवताचक्रपङ्क्तिः ।
भोजेन्द्रश्रीशलभपटली दुष्टभूपाज्यसंपद्
येनोद्दीप्ता किमपि तदलं धाम वः श्याममव्यात् ॥ १८ ॥

**( नान्द्यन्ते )**

**सूत्रधारः—**भो भोः ! इत इतः ।

**( प्रविश्य )**

**पारिपार्श्वकः—**भाव ! कथमिदानीमाहूतः ?

**सूत्रधारः—**अये भरतवर्य ! श्रूयताम्—अद्य किल शंभुस्वयम्भूजम्भभेदनाद्यमरशिरोविभूषणाम्भोधिसंभवा कुचकुंकुमसंभारसंभृतपरभागपदाम्भोरुहरेणोर्भुवनसंमोहनकरणचातुरीधुरीणमाधुरीस्फुरद्वरवेणोः सकलकलाकलावतीविलाससंवलितकुमुद्वतीवन्धोः कारुण्यामृतसिन्धोर्भगवतो मधुनिघातिनः पुरस्तादस्मदुपनिबद्धः कंसविध्वंसनो नाम प्रवन्धोऽद्याभिनेतव्य इति कृष्णलीलामृतकल्लोलिनीविलासतृष्णराजहंसीभूतशारदेन भगवता नारदेन त्रिलोक्यामप्रतिहताज्ञेन समाज्ञप्तोऽस्मि । तदेतत्केनापि प्राक्तनेनास्माकं भाग्यातिशयेनैव समुपस्थितमिति जानीमहि । यतः—

आस्वाद्यं चरितामृतं मुरभिदः संसत् प्रशंसैकभू-
र्देवर्षेः कवितास्थलं मधुवनं नृत्यं तथास्मादृशाम् ।
एकैकं कृतिनः कुशेशयभुवः शिल्पैरनल्पैः कृतं
तत्तच्चेन्मिलितं कथं न मुदितं कुर्यात्प्रसह्याखिलम् ॥ १९ ॥

**अपि च—**

स्वस्था स्वर्गधुनीव सर्वरसभूर्भूमीव सन्ध्यादृता
दीपश्रेणिरिव प्रमोदितबला संग्रामलक्ष्मीरिव ।
निर्दोषा किरणावलीव तरणेः श्रीकृष्णसाराश्रया
पुण्यारण्यपरम्परेव सुकवेर्जीयादियं निर्मितिः ॥ २० ॥

**पारिपार्श्वकः—**भाव ! साम्प्रतमेनेदृशे साहसे प्रवर्तनमनुचितम् ।

**सूत्रधारः**—( **विमृश्य** ) अये मारिष ! किं ब्रवीषि, केचन क्रूराचार-विहाराः परमपुरुषासूयाकलुषितचेतसो नास्मिन् रज्येयुः, प्रत्युतास्मभ्यमभ्य-सूयन्तः सभ्यतामपि जह्युः। भवतु, किमेतावता—

रसिकजनविनोदस्यैष भूरेष एव
प्रियतमविधुराणामुद्धरः क्लेशराशिः।
अमृतकिरणबिम्बः किं ततो नावलम्ब्य-
स्त्रिजगति नहि किञ्चिद् यन्मुदे सर्वजन्तोः ॥ २१ ॥

**पारिपार्श्विकः**—भाव ! सम्यङ्निरणायि मच्चेतोगतम्। अन्यच्चा-स्माकमसाधारणं प्रतिकर्तव्यमुपस्थितम्। यदिह—

केनाप्युन्नद्धवैरेण राज्ञाऽस्य निधनेच्छया।
भ्रातरो निहताः पूर्वे पितरौ च नियन्त्रितौ ॥ २२ ॥

**सूत्रधारः**—( **सविषादसान्त्वनम्** ) अये किमतिपरितप्यते।

एको नराधमः स्वार्थं स्वबन्धूनपि बाधते।
सन्तापं तनयत्येकः परार्थं पुरुषोत्तमः ॥ २३ ॥

तदलमनया चिन्तया प्रवर्त्यतां निस्तरङ्गो रङ्गः। तदुचितं च गीयताम्।

**पारिपार्श्विकः**—भाव ! कं समयमुद्दिश्य गेयम् ?

**सूत्रधारः**—नन्विममेव सर्वजनसन्तोषास्पदं वसन्तम्। यस्मिन्—

कुजामोदी गन्धवाहः पुन्नागाहितकम्पतः।
व्याधुन्वंश्चापगावेगं कस्यायं न सुखावहः ? ॥ २४ ॥

किन्त्वत्र सर्वथैवाक्रूरविहारेण भवितव्यम्।

**पारिपार्श्विकः**—अथ किम् ?

( **नेपथ्ये** )

कदा वृन्दारण्योच्छलदमलधूलीषु लुठतो
मम प्रेमा रामानुजचरितचिन्तासु भविता।
सृजन्नस्रारम्भं पुलकमुकुलालङ्कृततनु-
र्दिवा वा नक्तं वा स्थितमथ गतं वेद्मि न यतः ॥२५॥

**अपि च**—

निवारयाश्वानायुष्मन् वृथा किं स्थीयते रथे।
एतानि पदचिह्नानि लक्ष्यन्ते रामकृष्णयोः ॥ २६ ॥

उभौ—( श्रुतिमभिनीय नेपथ्याभिमुखमवलोक्य सचमत्कारम् )

लक्ष्माणि ध्वजवज्रपङ्कजयवच्छत्रोद्र्ध्वलेखायुता-
न्यालक्ष्याम्बुरुहाक्षपादतलयोः क्षोणीतलेऽह्नाय यः।
ध्यायत्युत्पुलकत्युदञ्चति लुठत्याक्रन्दति प्रीयते
कोऽन्यो धन्यतमस्ततस्त्रिभुवने स्याद्गान्दिनीनन्दनात् ॥ २७ ॥

अपि च—

धन्यैतस्य जनिः पिता च जननी चैतस्य धन्याधिकं
धन्यैतेन वसुन्धरा किमधिकं चैतेन धन्यं जगत्।
यः कंसैकनिदेशवर्त्यपि हरेः पादाब्जलक्ष्मेक्षणा-
दक्रूरोस्त्रनिरुद्धकण्ठकुहरः प्रेमाब्धिमग्नोऽभवत् ॥ २८ ॥

तदावामप्येनं महाभागवतं भगवदन्तिकमानयावः। ( इति निष्क्रान्तौ )।

॥ प्रस्तावना ॥

( ततः प्रविशति यथानिर्दिष्टोऽक्रूरः )

अक्रूरः—( मृदुलविशालशीतलशिलातलमवलोक्य ) आयुष्मन्! पश्य पश्य—

इहासीदासीनः सुरभिगणसंचारणपरः
( कदम्बतरुसंवलितं भूमीतलमवलोक्य )
सुधाधारोद्गारामिह मुरलिकागीतिमतनोत्।
( गुञ्जन्मधुकरपुञ्जकुञ्जकुहरमवलोक्य )
इहानङ्गासंगाकुलितवनितानां मुदमधात्
( परितोऽवलोक्य सात्मश्लाघम् )
अहो धन्यम्मन्यं जनुरिदमिदं लोचनपदम् ॥ २९ ॥

अपि च—

सरभसममराणां मौलिरत्नालिरोचिः
करसरसिजयुग्मं सोत्सुकं सिन्धुजायाः।
कुचकलशयुगं सप्रेमगोपाङ्गनानां
यदुपचरणकामं तत्पदं किं स्पृशेयम् ॥ ३० ॥

**अपि च—**

अभङ्गुराक्षयोत्तुङ्गतरङ्गापाङ्गसङ्गिनी ।
केशवस्य दृशोः शोभा किं मां संभावयिष्यति ? ॥ ३१ ॥

**श्रीकृष्णः**—आर्य ! किमस्मासु लोकोत्तरप्रेमचमत्कारवानक्रूर एव ।

**बलरामः**—वत्स ! किमद्यापि बाल्यमुल्लासयसि । अयं भगवान् बादरायण एव । ( **इति साश्चर्यमालोकयतः** ) ।

**( नेपथ्ये )**

भो भोः सखायः ! समयानभिज्ञानेतानाज्ञापयन्तु शतकोटिपाणिकृपीटयोनिप्रभृतीन् कथं वैतेषां मुकुटकोटिभिरुत्कटकठिनेऽध्वनि वत्सस्य शिरीषदलमृदुलपदकमलस्य संचरणं भविष्यति ।

**अक्रूरः**—( **श्रुतिमभिनीय ससंदेहम्** ) आयुष्मन् ! किमेतत् ?

**सूतः**—प्रायो भगवतः प्रलम्बारेर्वचनमेवैतत् ।

**अक्रूरः**—तत् खलु प्रायो भगवता कृष्णेनाप्यत्रैव भवितव्यम् । ( **इति सोत्कण्ठं समाकलयतः** ) ।

**( ततः प्रविशति नटबलदेवपुरोगमः सहचरैः सह श्रीकृष्णः )**

**श्रीकृष्णः**—( **परितोऽवलोक्य** ) भो भोः सखायः ! समाकलयत सायंसमयशोभाम् । यदिह—

दिवाधीशे दीव्यन्निजकरबलेनैव तमसां
रिपूणां संहारिण्यनुसरति लोकान्तरमितः ।
प्रदीपच्छद्मानः प्रतिसदनमेतस्य शिशवः
पलायन्ते कान्तास्तनवसनगुप्ताः प्रतिदिशम् ॥ ३२ ॥

**अपि च—**

किं पाकवल्लिरियमुल्लसति प्रतीची
यस्यां पचेलिमफलं दिननाथबिम्बम् ।
संचूर्णितस्य चरमाचलतो निपातात्
तस्यैव बीजनिचयस्तमसां विलासः ॥ ३३ ॥

**अपि च—**

चुल्यां जलेशदिशि कान्दविकीह सन्ध्या
चण्डांशुमण्डलमधो विनिधाय वह्निम्।
कन्दौ विहायसि विसारितमः शितिम्नि
तारोत्करं कलय लाजचयं चिनोति ॥ ३४ ॥

**अक्रूरः**—( **दूरादवलोक्य सानन्दम्** ) अयं कर्पूरश्रीस्फारीकरणविग्रहो बलः कस्तूरिकास्तूपाच्छादनाच्छादनद्युतिः। अयं तावद्—

इन्द्रनीलाचलोदञ्चच्चन्द्रतन्द्राकराननः ।
तिरयत्यंशुकेनांशून् नवीनस्यांशुमालिनः ॥ ३५ ॥

( **पुनः सप्रेमभक्तिनिर्वेदम्** )—

अनुजनुरनुरागो वन्धिनिर्वन्धतस्ते
रहसि नवकुरङ्गीनेत्रयाङ्गीकृते यः।
ननु हतकमनस्त किं निवध्नासि नास्मि-
न्मुदिरमधुरधाम्नि प्रेम्णि गोपाङ्गनानाम् ॥ ३६ ॥

**भगवान् श्रीकृष्णः**—आर्य ! महदाश्चर्यमनयोर्नटयोरभिनयकला-कौशलम्। यदावयोः स्वरूपाऽनुकरणेनावामपि व्यामोहयतः।

**बलः**—वत्स ! एवमेव।

**गोप्यः**—( **समालोक्य सकुतूहलमन्योन्यम्** ) अहो ! पेक्ख पेक्ख कोअं सोंदज्जमज्जादापज्जतिसअनं पुरो अलंविहारी सव्वाणं मणोहारी विरेहई। ( अहो ! पश्य पश्य, कोऽयं सौन्दर्यमर्यादापर्याप्तिसदनं पुरो अलंविहारी सर्वासां मनोहारी विराजते )। ( **इति साश्चर्यं विलोकयन्ति** )।

**अक्रूरः**—( **सपरामर्शम्** ) सायन्तनसुषमालोकनकुतूहलाकर्षितहृदयौ नाद्यापि मामवलोकयतः श्रीरामकृष्णौ। तत्स्वयमेव चरणान्तिकमुपसर्पामि। ( **इति तथाकरोति** )।

**नटरामकृष्णौ**—( **पुरोऽवलोक्य परस्परम्** )—

आश्लिष्यन्निव बाहुभ्यां लोचनाभ्यां पिबन्निव।
आजिघ्रन्निव नासाभ्यां कोऽयमस्मासु रज्यति ॥ ३७ ॥

( इति सस्पृहमालोकयतः )

**अक्रूरः**—( उपसृत्य ) भगवंस्तव किङ्कराऽनुकिङ्करोऽयमक्रूरः प्रणमति। ( इति चरणयोः पतति )।

**नटरामकृष्णौ**—( सादरमुत्थाप्य परिष्वज्य ) तात ! किमेतदनुचितमाचरसि ? भवद्विधानां जगदाराध्यानामुपास्यः कथमनायुष्यभागी न स्यात्।

**नटसुदामा**— शान्तम् !

स्वारोपिततरोर्मूलालम्बनेनेव वत्सलः ।
स्पर्शेन चरणस्यापि बालानां मोदते पिता ॥ ३८ ॥

**अक्रूरः**—( साश्रुपुलकम् ) भगवन् ! किं भवन्मायाव्यामोहितचेतसो व्यामोहनपिष्टपेषेण ।

दूराद् ब्रह्मशिवेन्द्र पूर्वदिविषद्वृन्दे नमस्कुर्वति
व्यावेल्लद्[1] व्रजबालकौघलगुडत्रुट्यत्किरीटे हठात् ।
सावज्ञा मदमत्तसिन्धुरदृशां शोभाद्विषः सालसा
दृक्पातास्तव नन्दवंशतिलकस्वान्ते सदा सन्तु मे ॥ ३९ ॥

**अपि च**—

मुक्तेरप्यतिदुर्लभा हिमगिरिप्रस्यन्दि[2] मन्दाकिनी-
धारातोऽप्यतिशीतलातिमसृणा चान्द्रान्मयूखादपि ।
वाञ्छातोऽप्यतिविस्तृताविषयिणां त्वत्पादचिन्तापर-
स्वान्तादप्यतिनिर्मला मयि कृपादृष्टिस्तवास्तां प्रभो ! ॥४०॥

( इति भूयः प्रणमति )

**नटरामकृष्णौ**—तात ! संप्राप्तमन्धतमसं तत्। साम्प्रतं सदनमनुसरामः। ( इति कतिचित्पदानि परिक्रामन्ति )।

**नटसुदामा**—( परितोऽवलोक्य ससंभ्रमम् ) सखे ! त्वर्यतां त्वर्यतां भवनगमनाय। पश्य पश्य—

किमेतद्दिग्बाला मृगमदविलेपा लघुमहः
कुविद्या मेदिन्याः किमसितपटानां प्रकटनम् ।
त्रिलोकीकामिन्याः किमु कुवलयोल्लासिशयनं
रजन्या वाणिन्याः किमु कुहकजालं किमु तमः ॥ ४१ ॥

---

१. 'व्यावेलात्' इति मूलपु० । २. 'स्यन्द' इति मू० पु० ।

( विमर्शमभिनीय )

कस्तूरीमसृणैर्महीध्रकठिनैर्व्यालावलीभीषणै-
दिग्दन्तावलमांसलैः खलकुलस्वान्तावगाहक्षमैः ।
क्रुध्यत्कासरयूथदुर्द्धरतरैर्हालाहलोन्माथिभिः
कल्पान्तोच्छलदब्धिमध्यविषमैर्ग्रस्तं तमोभिर्जगत् ॥ ४२ ॥

**नटकृष्णः**—वयस्य ! इदमदूरे भवनम् । सत्वरमेतन्महदागमनं तातचरणा गोचरणीयाः ।

**नटसुदामा**—( **निरूप्य सोल्लासम्** ) वयस्य ! पश्य पश्य । भवन्तं पुरो व्रजन्त्यमी व्रजराजचरणा वात्सल्यप्रोच्छलच्चेतसः । ( **इति सर्वे ससंभ्रममावासं प्रविश्य तमुपसर्पन्ति** ) ।

**नटनन्दः**—( **सास्रम्** ) वत्स प्रलम्बारे ! किमिति महान् विलम्बोऽद्य भवतोः ?

**नटकृष्णः**—तात ! अचिन्तितचिन्तामणिप्राप्तिप्रमोदेन ।

**बलः**—( **ससम्भ्रममुत्थाय** ) वत्स ! आसनमासनम्, पुरस्तादार्यचरणाः। ( **सर्वे लज्जां नाटयन्ति** ) ।

**कृष्णः**—( **सत्वरमुत्थाय** ) आर्य ! नटोऽयम्, नटोऽयम् ।

**नटनन्दः**—( **सप्रमोदम्** ) वत्स ! कोऽसौ चिन्तामणिः ?

**नटकृष्णः**—( **सविनयम् अक्रूरं निर्दिशति** ) ।

**अक्रूरः**—( **सविनयम्** ) व्रजराज ! भवच्चरणयोरक्रूरोऽहं प्रणमामि ।

**नटनन्दः**—( **समालिङ्ग्य** ) कः कोऽत्र भोः ! आसनं मधुपर्कः । ( **इति सादरमुपवेश्य** ) दानपते ! स्वागतम् ।

**अक्रूरः**—अद्यैव भवच्चरणयोरवलोकनेन ।

**नटनन्दः**—( **सबहुमानम्** )—

अद्य नः सफलं वेश्म जननं जीवितं कुलम् ।
संभाविताः स्मो भवता यत् पदाम्भोजरेणुभिः ॥ ४३ ॥

**अपि च**—

गोचर्यामात्रपर्याप्तचातुर्या वयमन्वहम् ।
कथं स्तुतिं सपर्यां वा भवतां भावयामहे ॥ ४४ ॥

**नटकृष्णः**—तात ! पथश्रान्तानामेषां श्रमापनोदनविनोदाय साम्प्रतं त्वरयामः ।

**नटनन्दः**—एवमेव । ( **इति तथाकुर्वन्ति** ) ।

( **प्रविश्य पटीक्षेपेण** )

**नटयशोदा**—(**सोत्साहम्**) अज्जउत्त ! तुम्हाणं गोउलवासिआणं भाअधेअमेत्तेणज्जेव परमअदाणं एत्थ आगअणं, तहवि विशेषं पुच्छम्म । ( आर्यपुत्र ! युष्माकं गोकुलवासिनां भागधेयमात्रेणैव परमहतामत्रागमनम्, तथापि विशेषं पृच्छामि ) ।

**नटनन्दः**—( **कर्णे एवमेवम्** ) ।

**नटयशोदा**—( **सकरुणत्रपम् अक्रूरमवलोक्य संस्कृतेन** ) भो भो दानपते ! किमेतदध्यवसितोऽसि ? यदिह—

कंसः क्रूरः कपटपटवो मन्त्रिणो यस्य दैत्याः
येनाक्रान्तास्त्रिदशपतयोऽप्यन्तकोऽप्यन्तभीत्या ।
तस्याभ्यर्णं यदि पुनरयं नीयते क्षीरकण्ठः
कण्ठे प्राणान् क्षणमपि कथं धारयाम्येकपुत्रा ॥ ४५ ॥

**अक्रूरः**—( **विहस्य** ) आर्ये ! वत्सेऽस्मिन् वात्सल्यमुचितमेव, परन्तु—

यत्कैशोरयशः समञ्चतितरां रोमाञ्चितो भूपति-
र्यत्पौगण्डबलं स्मरन्ननुपदं देवाधिपः कम्पते ।
यत्कौमारविहारदत्तहृदयो धाताऽप्यलं लज्जते
तस्मिन् विन्दसि नन्दगेहिनि भयं कंसादहो विभ्रमः ॥ ४६ ॥

**नटनन्दः**—अयि ! किमसंभाव्यसंभावनया ? परमभागवतानामेतेषां समीहिताचरणमेव श्रेयः । तदिदानीमेते शयनसदनं प्रविशन्तु ।

**सर्वे**—एवमेव । ( **इति निष्क्रान्ताः** ) ।

( **ततः प्रविशन्ति नटगोपसीमन्तिन्यः** )

(**नन्दद्वारि रथमवलोक्य**) अम्हो ! किं एदं ? ( अहो ! किमिदम् ) ? ( **इति सवितर्कं निभालयन्ति** ) ।

( **नेपथ्ये** )

शिवास्ते सन्तु पन्थानः शत्रवो यान्तु संक्षयम् ।
बान्धवानां मुदे भूयाः साधूनामपि वृद्धये ॥ ४७ ॥

**सर्वाः** – ( श्रुतिमभिनीय नेपथ्याभिमुखमवलोक्य संस्कृतेन ) अहो ! फलित-मस्माकं दुःखदर्शनेन ।

"आरुह्यैष रथं प्रयाति दयितः किं नेक्षते कातराः
( इति मोहं नाटयन्ति, पुनः सकातर्यमवलोक्य )
हा धातर्न रथोऽपि लोचनपथः केतुः परं लक्ष्यते" ।
( इति त्वरितं गच्छन्त्यः स्खलितं नाटयित्वा )

आः किमेतत् ? ( इति मूर्च्छन्ति ) ।

( चिराच्चक्षुषी समुन्मील्य )

धिग्दैवं रविबिम्बचुम्बिनमिमं चावृण्वतीप्रोच्छलद्-
धूलीधोरणिरप्यसौ नहि दृशोरभ्यासमासेवते ॥ ४८ ॥

( इति भूमीतलविलुलिततनुवल्ल्यस्तां दिशमवलोक्य परस्परम् सोत्कण्ठम् )

यदङ्कात्पर्यङ्कादपि सदनमध्यादपि दृशो-
र्दवीयांसं देशं विधिकुचरितैर्याति दयितः ।
अतः प्रस्थानाय त्वरयत यदेते प्रथमत-
स्तमुद्यान्ति प्राणा गदितुमिह नः प्रेम्णि लघुताम् ॥ ४९ ॥

हा धिक् !

मुहूर्ते यामार्द्धे प्रहरविगमे वा शमयिता
ममान्तःसन्तापं ध्रुवमिह कृतान्तः करुणया ।
परन्तु प्राणानामतिकुचरितं यत्प्रियतम-
प्रयाणप्रारम्भे हृदि वसति संभावनमपि ॥ ५० ॥

( इति लपन्त्यश्चिरादूर्ध्वमधश्चावलोक्य )

न मुद्रा पद्मानां तपति तपने प्रागत्रगता
कलङ्कोऽप्यस्याङ्के प्रियसखि पुरा केन विदितः ।
( परितोऽवलोक्य )
रसालाग्रे पूर्वं क्व परिकलितो हन्त हुतभुक्
( विमृश्य )
प्रयाते प्राणेशे कति कति भविष्यन्ति न दशाः ॥ ५१ ॥

**गोप्यः**—( **सवैकल्यमन्योन्यम्** ) आः किमेतत् ? ( **इति मुह्यन्ति** )।

**कृष्णः**—( **सप्रेमस्मितचमत्काराऽनुचितप्रत्ययम्** ) हंहो प्रेयस्यः ! नृत्यमेत-न्नृत्यमेतत् ।

**सर्वाः**—( **श्रुतिमभिनीय संज्ञां लब्ध्वा स्वगतम्** )—

वज्राघातो हृदि नयनयोः प्रोज्ज्वलज्जातवेदाः
कर्णे शल्यं वपुषि सकलेऽप्युत्कटः कालकूटः।
एतत्तौर्यत्रिकमथ पुनः किन्नु धाता विधाता

( **इति पुनर्मूर्च्छन्ति**···**चिरेण संज्ञां लब्ध्वा** )

यद्येवं स्यात् कथय कतमाजीवितास्तां दशा ते ॥ ५२ ॥

**कृष्णः**—( **सस्मितस्निग्धापाङ्गतरङ्गितं सर्वासां वदनमवलोक्य** ) अयि प्रियतमाः ! नटानां कौशलमेतत् । अलमन्यथाशङ्कया ।

**गोप्यः**—हिअअ ! समस्सस समस्सस, पबंधकत्तुणो नारदस्सज्जेव दुव्विअ-दृत्तणेण तुमं कदत्थिदंसि । ( हृदय ! समाश्वसिहि समाश्वसिहि, प्रबन्धकर्तुर्नार-दस्यैव दुर्विदग्धत्वेन त्वं कदर्थितमसि )।

**भद्रमुखः**—( **सभ्रूभङ्गाट्टहासम्** ) आः अआरणगव्विणीओ ! तुम्हेहिं अम्हाणं वअस्सो किणिदो किं, जंनिअंतरंज्जेव्व परिचार ओव्व णिअडट्ठिदो भवि-स्सदि ? ( आः अकारणगर्विण्यः ! युष्माभिरस्माकं वयस्यः क्रीतः किं, यन्निरन्तर-मेव परिचारक इव निकटस्थितो भविष्यति ? )।

**कृष्णः**—भो अप्रस्तुतालाप ! विरमतादकाण्डे पाण्डित्यं भवतः[1] । ( **तथा समालोकयन्ति** )।

**नटगोप्यः**—( **अकाण्डताण्डवितोल्लासमन्योन्यमहमहमिकया काश्चित्पुरः स्फुरन्तं तमालमालोक्य संस्कृतेन**[2] )—

सखि ! प्राचीमच्चत्ययमुदयभूमीधरमिल-
त्कलानाथं निन्दन् वदनसुषमाभिः प्रियतमः।

**अपराः**—( **सतडितं तडित्वन्तमवलोक्य सरोषम्** ) सखि ! भ्रान्तासि—

स्मरान्धां सन्धत्ते चलमतिरुदीचीमनुदिशन्-

**अन्याः**—( **कुञ्जकुहरप्रवेशोद्धुरं मयूरमालोक्य** ) नहि, नहि—

---

१. अत्र पाठस्त्रुटित इव प्रतिभाति ।

२. मूले नास्ति

प्रतीचीं संकेते

**इतराः**—( **शीकरनिकरमौक्तिकरत्नं तरणिजातरङ्गमालोक्य** ) सखि ! मैवमाशङ्कनीयम्—

विचकिलमुदीचीं प्रविकिरन् ॥ ५३ ॥

( **आराद्वनकोकिलकूजितमाकलय्य सानन्दमन्योन्यम्** ) अहो वयस्याः ! त्वर्यताम्, यददूर एव मुरलिकागीतिसंकेतेनास्मानाकारयति। ( **इति सत्वरं कतिचित्पदानि परिक्रम्य पुनस्तच्चरणचिह्नान्यवलोक्य सपुलकाह्लादमन्योन्यम्** ) सखि ! तन्निश्चितमयमेव पन्थास्तदनुसन्धानाय। पश्य पश्य—

अम्भोरुहदम्भोलिध्वजातपत्राङ्कुशोर्द्ध्वलेखाभिः।
एते पदपङ्कजयोरङ्काः पङ्केरुहाक्षस्य ॥ ५४ ॥

( **इति निष्क्रान्ताः** )

( **ततः प्रविशतौ रथारूढौ नटकृष्णरामावक्रूरश्च** )

**नटकृष्णः**—( **चक्षुषी विस्फार्य साश्चर्यम्** ) तात ! किमेतत् ?

लिप्ताकाशं धवलितमहः केवलं यद्व्यलोकि
द्राक् प्रव्यक्तं नगरमिति तत्तोरणाट्टादिभेदम्।
इन्दुग्रावस्फटिकपटलं स्पष्टरेखोपरेखं
शिल्पानल्पं स्थलविलसितं वीक्ष्यते तत्क्षणेन ॥ ५५ ॥

**नटबलः**—वत्स ! अश्वानां सारथेश्चैषा लोकोत्तरता।

**अक्रूरः**—देव ! इयमियमदूरे मधुपुरी।

**नटकृष्णः**—( **सोल्लासमवलोक्य** ) आर्य ! विलोक्यताम्—

पुरस्तादारामः किसलयकरेणाखिलहरिद्-
वधूर्गौरी कुर्वन् प्रसृमरपरागैर्विजयते।
यदासङ्गादभृङ्गास्तरलिततरङ्गामिव नदी-
मदीना गाहन्ते कुसुमरसभूतिं तलभुवः ॥ ५६ ॥

**नटबलः**—( **अन्यतोऽवलोक्य सप्रमोदम्** ) वत्स ! पश्य पश्य—

पयस्तुलितपारदं विपुलपुण्डरीकोदयं
निबद्धमभितो लसद्विधुशिलाभिरामूलतः।
चिरेण परितापितान् कलरुतैर्मरालान् दधत्
तिरस्कृतपयः पयोनिधिसरः पुरो राजते ॥ ५७ ॥

**अपि च—**

महेन्द्रमणिभिः क्वचित्कमलरागसारैः क्वचित्
क्वचिद्विमलहीरकैर्घटितघट्टनिःश्रेणिकम् ।
समाश्रितजनश्रमं हृरदुपेतरूपत्रयं
सदैकरसमव्ययं विजयते सरो ब्रह्मवत् ॥ ५८ ॥

**अक्रूरः**—( **पुरस्तादवलोक्य ससंभ्रमम्** ) देव ! कोऽपि पान्थः संभ्रान्त इवास्मानभिमुखमायाति ।

**नटकृष्णः**– ( **सवितर्कम्** ) प्रायो भवदीयः कश्चिदेषः ।

( **ततः प्रविशति यथानिर्दिष्टः पुरुषः** )

**पुरुषः**—( **पुरोऽवलोक्य** ) अहो ! अध्वन्येवोपलब्धा आराध्यचरणाः । तदुपसृत्य कथयामि । ( **समुपसृत्य** ) आर्य ! प्रणमामि ।

**अक्रूरः**—वत्स ! अपि कुशलं भोजराजस्य ?

**पुरुषः**—आर्य ! विचार्य ब्रवीमि ।

**अक्रूरः**—( **ससन्देहम्** ) कथय किमुद्यमः साम्प्रतं भोजराजः ?

**पुरुषः**—कस्यचित् त्रिकालज्ञस्य वचसा दोधूयमानमना युद्धाय सन्नद्धः ।

**अक्रूरः**—कीदृशं तद्वचः ?

**पुरुषः**—

विहारी कुञ्जकुहरैर्हरिर्विपिनमध्यतः ।
प्रविश्य नगरं राजकुञ्जरं निहनिष्यति ॥ ५९ ॥

**अक्रूरः**—( **विमृश्य** ) कीदृशः स हरिः ?

**पुरुषः**—उक्तं किल तेनैव—

अत्युद्दम्भितकुम्भिकुम्भदलनप्रोन्मुक्तमुक्ताफलै-
र्व्याप्तानन्तवनान्तवर्णितयशः पूरः किशोरोऽपि यः ।
सोऽयं सम्प्रति वज्रतीव्रनखरव्रातोग्रदंष्ट्राङ्कुरः
किं धीरैर्गुरुतोऽप्यकुण्ठवचनैः कण्ठीरवः स्तूयताम् ॥ ६० ॥

**अक्रूरः**—( **विमृश्य स्वगतम्** ) नारदस्य भगवतो वचसा प्रागेव निर्णीतमेतत् । ( **प्रकाशम्** ) भवतु तावन्नगरं प्रविश्य विचारणीयम् । ( **इति प्रवेशं नाटयन्ति** ) ।

**नटकृष्णः**—( *समन्तान्नगरलक्ष्मीं समीक्ष्य* ) आर्य ! पश्य पश्य—

किमेते प्रासादा गिरिशगिरिहासाय दधते
स्फुरज्ज्योत्स्नाजालं स्फटिकमणिचन्द्रोपलकृताः ।
असौ कुम्भश्रेणी विमलकलधौतेन घटिता
शिरस्येषां भ्रान्तिं नवदिनमणीनां वितनुते ॥ ६१ ॥

**अक्रूरः**—( *सविनयं* ) भो देव ! इदमदूरादस्मद्वेश्म । तदद्य चरणरेणुभिरलंकृत्य भ्रातृभ्यां विश्रमणीयम् ।

**नटबलः** तात ! व्रजराजचरणाः कुत्रास्मान् प्रतीक्ष्य वर्तन्ते, तद् विचारयामः ।

**अक्रूरः**—( *वैवश्यं नाटयति* ) ।

**भ्रातरौ**—( *सानुनयम्* ) तात ! साम्प्रतमेतत् ।

**अक्रूरः**—( *विमृश्य सविनयम्* ) यथारुचितं तत्र भवद्भ्याम् । ( *इति दूराद्विलोक्य* ) एते खलु व्रजराजचरणाः शकटघटाभिर्द्वितीयं मधुरानगरमिव प्रकटीकृत्योद्यानमासाद्य वर्तन्ते ।

**नटराम-कृष्णौ**—तत्त्वरितमुपसर्पामः ( *इत्युपसर्पन्ति* ) ।

**नटकृष्णः**—( *स्वगतम्* ) भवतु तावत् पितृचरणस्याभ्यर्णे रजनीमतिवाह्य साग्रजः ससखः प्रातर्मधुपुरशोभां निभालयिष्ये, तदाज्ञयाऽद्यापि ।

( *इति निष्क्रान्ताः* )

( *ततः प्रविशति सहचर्या शोभया सह पुरदेवता* )

**शोभा**—

धन्यासि सखि पुण्यासि बहुमान्यासि देहिनाम् ।
यन्नन्दनन्दनस्यासि नयनानन्दकौमुदी ॥ ६२ ॥

**पुरदेवता**—( *सरोमाञ्चात्मश्लाघम्* ) एवमेव सखि ! किमसम्भाव्यं तदनुकम्पायाः । तदेहि तत्पदलक्ष्मलक्षितां नगरभूमीमवलोकयावः । ( *इति कतिचित्पदानि परिक्रामतः* ) ।

( *नेपथ्ये कलकलः* )

**उभे**—( *सकौतुकं निरूप्य परस्परम्* )

आक्रन्दो यद् वलति रजकस्याङ्गणं संगतानां
मालाकारस्य तु विजयते कोऽपि तोषप्रघोषः।
एतेनैव स्फुटमवगतं भावि यद् यद् द्विषां वा
भक्तानां वा किमतिकथया केशिविध्वंसनस्य ॥ ६३ ॥

( अन्यतोऽवलोक्य सकुतूहलमन्योन्यम् ) केयं प्रमदोत्तमा प्राक् प्रत्याकलितेवाभाति। ( निपुणं निभाल्य साश्चर्यम् ) सैवेयं त्रिवक्रेति तर्क्यते। अहो यशोविलासो याशोदेयस्य।

यस्य प्रागनुलेपनार्प्पणवशान्प्राप्याङ्गसङ्गं मनाक्
कुब्जाप्यब्जसुगन्धिरन्धयति यद् विश्वं श्रिया श्रीरिव।
एते नैव हि गोकुलेन्द्रतनयस्यागोपमापद्मजं
हृष्यद्रोमभिरुच्यमानमभितस्तत्तच्च संभाव्यते ॥ ६४ ॥

**गोप्यः**—( सस्मितमन्योन्यम् ) हला पिअसहिओ! अच्चरिअं खु एदं सुणीअदु। ( हला प्रियसख्यः! आश्चर्यं खल्वेतच्छ्रूयताम् ) ( संस्कृतेन )—

प्रायो मधुरापुर्याः सारं कुब्जा समस्तवस्तूनाम्।
रज्यति रसिकोत्तंसस्तस्यामन्यद् यदुत्सृज्य ॥ ६५ ॥

**श्रीकृष्णः**—भो भोः प्रियवयस्याः! समाकलयत—

रज्यते रसिकस्तस्मिन् यस्मिन्नेकोऽपि सन् गुणः।
कस्तूरीस्तव्यसौरभ्या मलिनापि न हीयते ॥ ६६ ॥

**भद्रमुखः**—जिदं अम्हेहिं जिदं अम्हेहिं। (जितमस्माभिर्जितमस्माभिः)। ( इति सकक्षास्फोटनं नटनमभिनीय ) अम्हो कुप्पडिहामेत्तगव्विदाओ! पिअवअस्सवअणभंगीए तुम्हे पराजिदा। ( अहो! कुप्रतिभामात्रगर्विताः! प्रियवयस्यवचनभङ्ग्या यूयं पराजिताः )।

**गोप्यः**—( सस्मितम् ) सच्चं ज्जेव जिदं तुम्हेहिं, लज्जामेत्तं णदु अम्हाणं किंपि। ( सत्यमेव जितं युष्माभिर्लज्जामात्रं न त्वस्माकं किमपि )।

**श्रीकृष्णः**—( सत्रपावहित्थम् ) सखे! रङ्गव्यापृतानां व्यासङ्गं मा संपादय। ( इति करे गृहीत्वोपवेशयति[1] ) ( सर्वे सकौतुकमवलोकयन्ति )।

( नेपथ्ये कलकलः )

**उभे**—( श्रुतिमभिनीय ) आः किमेतत्? ( इति कर्णस्फोटनं नाटयित्वा ) सखि शोभे! निरूप्यतां किमेतदिति? ( पुनर्नेपथ्ये ) अहो चित्रं चित्रम्—

---

१. मूले 'उपवेश्य' इति पाठः।

कोदण्डं तालकाण्डत्रयमितमशनिस्पर्द्धिदोर्दण्डलीला-
मात्रेणाकृष्टकोटिप्रकटभटघटाक्रन्द[1]कृन्नन्दसूनुः ।
सद्वीपाम्भोधिपृथ्वीधरधरणितलब्रह्मलोकप्रकम्पं
स्विद्यद्युध्यत्कदम्बं कडकडनिबिडाडम्बरं तद्बभञ्ज ॥ ६७ ॥

अपि च—

लाजाभर्जनपात्रवर्तिन इव क्षुब्धा धनुर्ध्वानतः
पारीन्द्राः कुलशैलकन्दरकुलादुत्प्लुत्य सर्वा दिशः ।
तत्कालोच्छलदब्धिमध्यमिलितैर्दिक्कुञ्जरैः संगता
यादोभिस्तुलिता भ्रमन्ति नितरामावर्तगर्तोदरे ॥ ६८ ॥

उभे—( ससंभ्रममाकलयतः ) । ( पुनर्नेपथ्ये ) अहो फलितमस्मत्संकल्पकल्पद्रुमेण । यदविलम्बितमेव—

आभीराणामहङ्कारैस्सार्द्धमुत्थापितं धनुः ।
आकृष्टं पश्यतां चित्तैर्भग्नं कंसस्य दुर्मदैः ॥ ६९ ॥

उभे—( श्रुतिमभिनीय सानन्दमन्योन्यम् ) अपि प्रायशो विमानचारिणां गीर्व्वाणानामयं सोल्लासवचोविलासः । ( परितोऽवलोक्य ) अहो ! सहसैव रजनिरजनि । यतः—

रत्नद्योतैः कुवलयमुदं वर्द्धयन् दिग्वधूभिः
स्फारैस्ताराकुसुमनिकरैः कीर्यमाणः कलावान् ।
लीलोदञ्चत्करमपनयन्नन्धकारं द्विषन्तं
रङ्गादारोहति गिरिशिरस्तुङ्गसिंहासनान्तम् ॥ ७० ॥

तदेहि व्रजेश्वरस्य विश्रामस्थानाभ्यर्णमुपव्रज्य प्रातर्भगवतः श्रीकृष्णस्य करणीयमाकर्णयावः । ( इति तथाकृत्वा पुरः समीक्ष्य ) अहो ! धन्यं धन्यम्, पुण्यपरीपाकः समुल्लसति गोपालावनिपालस्य, यदयम्—

अरुणकिरणदीव्यन्नव्यकौशेयसार-
प्रकटितपटसद्मद्वारुपद्वारभित्तिः ।
जलदगतिनिरासः कोऽपि लक्ष्मीविलासः
प्रवितरति निवासः सान्ध्यरागभ्रमं नः ॥ ७१ ॥

( इति अतिनिकटमुपसर्पतः ) ।

---

१. 'कंद' इति मूलेऽपपाठः । 'भटघटास्कन्द' इति वा समुचितः पाठः ।

( नेपथ्ये )

स्वल्पेनापि रवेः करेण रजनी द्राक्पूतनावत्तव
स्पृष्टैवावधिकैरवेषु न रुचिर्वक्रेष्विव त्वद्द्विषाम् ।
सोल्लासानि सरोरुहाणि नयनानीव त्वदालोकने
लोकानां व्रजराजवंशतिलक ! स्वापस्य नायं क्षणः ।। ७२ ।।

अपि च—

उद्यन्नेव भवानिव व्रजभुवां सर्वापदां संचयं
गाढध्वान्तकदम्बमन्तमनयद् देवस्त्विषां[1] वल्लभः ।
तद्बिम्बच्छलमंशुपल्लवमुखं माङ्गल्यकुम्भं तव
प्रस्थानोत्सवमाकलय्य दधते रक्ताम्बरा प्राग्वधूः ।। ७३ ।।

अपि च—

गीतज्ञाः कवयो नटा बहुकलाः शिक्षासु दक्षाः परे
विप्राः शान्त्युदकुम्भसंभृतकरा द्वारेषु सन्त्युत्सुकाः ।
तल्पं मुञ्च ददस्व लोचनफलं त्वं देहभाजामये !
गोपालक्षितिपालनन्दन ! कथं नाद्यापि निद्रा हृतिः ? ।। ७४ ।।

**उभे**—(**श्रुतिमभिनीय परस्परम्** ) अयि ! प्रायः प्रातः समयः समजनि । यदमी वन्दिनः स्तुतिभिर्भगवन्तं नन्दनन्दनं प्रबोधयन्ति । अपि च—

भिन्दन् घोरतरं तमः कुवलयापीडं तुदंस्तामसान्[2]
संचिन्वन् निजचक्रमोदमभितः क्ष्मानिर्जरां स्तोत्रयन् ।
स्मेरप्राञ्जलपङ्कजोज्ज्वलमुखीर्दिक्सुन्दरीर्नन्दयन्
भास्वांश्[3]चर्धितराजगर्वमयते पूर्वाद्रिसिंहासनम् ।। ७५ ।।

( **नेपथ्ये सोल्लासम्** )

अहो समीचीनमुच्यते । यदचिरेणैवमेव संपत्स्यते ।

**उभे**—( **श्रुतिमभिनीय परस्परं सानुनयम्** ) भगवतो नीलाम्बरस्य वचनमिदम् । तदनेन पथा[4] सखिभिः समं समेष्यति भगवान् नन्दनन्दनः । तदेकान्ते स्थित्वा तच्छोभां निभालयिष्यावः । ( **इति निष्क्रान्ते** ) ।

१. 'देवस्त्विषां' इति मूले पाठः । २. 'तामसात्' इति मूले ।
३. 'भास्वान् वर्धित' इति तु मूले पाठः । ४. 'सखा पथिभिः' इति मूले व्युत्क्रमः ।

**( ततः प्रविशतौ यथानिर्दिष्टौ नटरामकृष्णौ )**

**नटबलः**—( **पूर्वां दिशमवलोक्य सानन्दम्** ) वत्स ! पश्य पश्य—

प्रत्यूषस्य यतेः कमण्डलुरसौ काषायवासोऽञ्चितः
पूर्वाद्रेर्द्विरदाधिपस्य[1] करटः सिन्दूरपूराङ्कितः।
कण्ठस्थः कुरुविन्दकन्दलवरः प्राच्याः कुरङ्गीदृशः
किं वाऽह्नोऽग्निचितो हुताग्निपटलश्चण्डद्युतेर्मण्डलः ॥ ७६ ॥

**नटकृष्णः**—( **सविनयम्** ) आर्य ! श्रीमच्चरणेभ्यश्चेद् रोचते तर्हि नगरं प्रविश्य तत्सौन्दर्यं पश्यामः।

**नटबलः**—(**सप्रणयम्**) यथा रोचते वत्सायेति। ( **सर्वे प्रवेशं नाटयन्ति** )।

**( पुरोऽवलोक्य )**

**नटसुदामा**—( सामोदम् ) अहो वयस्याः ! पश्यन्तु —

इमानि प्राचीनान्युपरि वररत्नौघमहसा
खरांशोरंशून् यद्विदधति तिरस्तत्समुचितम्।
यदेतद्घर्मान्ते नवजलधराणां प्रियसख
त्विषां यातायाते न ददति पथस्तत्त्वनुचितम् ॥ ७७ ॥

**भद्रमुखः**—(**सानन्दं परितोऽवलोक्य सवितर्कम् संस्कृतेन**) भो भो वयस्याः ! तर्कयन्तु—

यदेषां हर्म्याणामुपरि विचरन्त्यः सुवदना
मृगाङ्कस्याङ्कस्थं मृगमपहरन्तेन कुतुकात्।
वदामस्तत्तत्त्वं स्ववदनसमानः क्वचिदसौ
भवेदित्याशङ्का न विरमति पङ्केरुहदृशाम् ॥ ७८ ॥

**सर्वे**—( **निरूप्य सानन्दम्** ) साधु भद्रमुख ! साधु। ( **इति कतिचित्पदानि परिक्रामन्ति** ) ( **नेपथ्ये संस्कृतेन** ) हंहो वयस्याः ! आश्चर्यम्—

धातुर्निर्मितिकौशलं रसिकतामूलं मनोजन्मन-
श्चाञ्चल्यं मनसः समस्तसुदृशः साक्षात्फलं चक्षुषः।
औज्ज्वल्यं भुवनस्य कार्मणविधेर्वैपुल्यमेकस्थलं
सर्वाश्चर्यसमुन्नतेः कलयत श्यामं किमेतन्महः ॥ ७९ ॥

---

१. 'त्य' इति मूलपाठोऽसंगतः।

**सर्वे**—( **श्रुतिमभिनीय सोल्लासम्** ) प्रायः पुराङ्गनानामयं प्रणयोद्गार-परिमलः।

**भद्रमुखः**—( **साट्टहासं भुजामुन्नीय** ) भो वअस्स हलहर ! समाकलेहि। अलं दे एदिणा रूअगरिमगव्वेण। जदो तुमंसि पुरदो वट्टमाणेवि पुरपुलडाहिं कण्होज्जेव पसंसीअदि। ( भो वयस्य हलधर ! समाकलय। अलं ते एतेन रूप-गरिमगर्वेण, यतस्त्वयि पुरतो वर्तमानेऽपि पुराङ्गनाभिः कृष्ण एव प्रशंस्यते )।

**नटबलः**—धिङ् मूर्ख ! किमप्रस्तुतं जल्पसि ?

**नटकृष्णः**—( **अनाकर्णितकं नाटयन्, अन्यतोऽवलोक्य** ) भोः सखायः ! पश्यन्तु—

समीरं नैतेषां सदृशमभिवीक्षे न च मनः
तयोः शक्यं कर्तुं जवनियमनं योगविधिना।
खगेन्द्रं कः शंसेत्प्रतिभरमनूरोरवरजं
त एते नीयन्तां तुरगपतयः केन तुलनाम् ॥ ८० ॥

**अन्यतोऽवलोक्य**—

इमे न ध्वान्तौघाः शशिकिरणकाण्डद्वयजुष-
स्तडित्वन्तः सन्तः किमिति विचरन्ति क्षितितले।
न शैलास्ते नीताः किल कुलिशघातैरचलतां
न दन्तश्च्योतन्तो मदजलभरं किं नु करिणः ॥ ८१ ॥

**नटश्रीदामा**—( **परितो विलोक्य जनान्तिकं सस्मितम्** ) प्रिय वयस्य कृष्ण ! पश्य पश्य—

प्रविशति नन्दकिशोरः पुरमिति सकले समुल्लसति।
विरमति न पुरवधूनां नीवीबन्धाय निर्बन्धः ॥ ८२ ॥

( **प्रकाशम्** ) भो भोः प्रियसहचर ! रोहिणीजठरखनिरत्नाङ्कुर ! पुरः समीक्षताम्—

इदं शीतं पाथः पिबत पथिका मुञ्चत मनाक्
पथक्लान्तिं कान्तास्मृतिजनितचिन्ताद्विगुणिताम्।
इति स्फीतापाङ्गं मृदुमधुरवाग्भङ्गिहसितं
प्रपापालीमाला हरति पथिकानां क्लमभरम् ॥ ८३ ॥

**भद्रमुखः**—( **सोपहासम्** ) भो पिअवअस्स णीलंबर ! पेक्ख पेक्ख । एसा क्खु करसण्णाए तुमं आआरयंती किंपि जंपदि । ता सुणिअदु । ( भोः प्रियवयस्य नीलाम्बर ! पश्य पश्य । एषा खलु करसंज्ञया त्वामाकारयन्ती किमपि जल्पति तच्छृणोतु ) । ( **इति स्वयमेव श्रुतिमभिनीय संस्कृतेन** ) आज्ञातम्, यद् ब्रवीति । श्रूयताम्—

न पीतशेषं मधुरं सुगन्धि सुशीतलं हृद्यमदोषमच्छम् ।
निपीय पानीयमिदं मदीयं क्लान्ति पथः किं न जहासि पान्थ ! ॥८४॥

**नटबलः**—धिङ् मूर्ख ! विरम विरम ।

**सुदामा**—( **सामोदम्** ) भो भोः प्रियसहचराः ! पुरस्तान्नगरतरुणस्य कस्यचिन्मालिकमहिलायाश्चान्योन्यं सस्मितं वाग्विलासकौशलं समाकलयन्तु—

"सप्तभिः सरसिजैरलङ्कृतां देहि मे सुतनु चम्पकस्रजम्" ।
"ईदृशी क्व तव भोग्ययोग्यता रे विमुग्ध कलयात्मसम्पदम्" ॥८५॥

**अपि च**--

"जहिहि जहिहि नास्या वेत्ति मूल्यं भवादृग्"
"वितर वितर मुग्धे दीयते यत्तवेष्टम्" ।
इति न विरमतः स्रक्कर्षणेऽन्योन्यपाणि-
ग्रहमनुकृतरोषं नागरी नागरश्च ॥ ८६ ॥

( **पुनरन्यतोऽवलोक्य साश्चर्यम्** ) भो भोः पश्यन्तु—

स्वर्णनीलशशिशोणमणीनां विक्रयाय वणिजः करभोरुः ।
गात्रनेत्रहसिताधरभासां गोपनाय यतते शतधापि ॥ ८७ ॥

( **कतिचित्पदानि परिक्रम्य परितोऽवलोक्य** )

**श्रीदामा**—( **जनान्तिकम्** ) भोः प्रियसहचर ! पूतनारे ! पश्य पश्य समन्तात्—

हृष्यद्रोम पतद्विलासकमलं स्विद्यत्कपोलस्थलं
स्फारापाङ्गतरङ्गितं स्मितलवश्रीचुम्बिबिम्बाधरम् ।
पौर्वापर्यविशृङ्खलोक्तिविगलद्वाग्व्यक्तिलुप्ताक्षरं
स्वीकुर्वन्ति परस्परं तव कथाः स्वैरं कुरङ्गीदृशः ॥ ८८ ॥

( **इत्यन्योन्यकरग्राहं कतिचित्पदानि गत्वा श्रुतिमभिनीय सोल्लासं परस्परम्** ) वयस्याः समाकर्णयन्तु वेदविद्याविशारदानां सदनेषु च—

ऋचोवाचां वीची श्रुतियुगलमोदं वितनुते
यजुःपाठोऽप्युच्चैर्मनसि परमानन्दविभवम् ।
इदं गीतं साम्नां बलदमृतपूरेऽखिलवपु-
र्निमग्नं केषां वा जगति जनितानां न कुरुते ॥ ८९ ।

**( पुनरन्यतोऽवलोक्य गत्वा )**

**बलः**—वत्स ! पश्य पश्य—

इतो मीमांसानां श्रुतिविषयमीमांसनमितः
समीक्षा सांख्यानां मतमलघुवैशेषिकमितः ।
इतो वेदान्तानां प्रतिवचनसिद्धान्तनमितः
पुराणाद्या विद्या त्रपयति निवासं सुरगुरोः ॥ ९० ॥

( **पुनरन्यतोऽवलोक्य** )—

अमी पञ्चाध्यायी नयविपिनसंचारचतुराः
परिस्फूर्जत्पञ्चावयवचयदंष्ट्राश्छलसटाः ।
सदोदञ्चत्तर्कप्रखर[1]नखरा धीरहरयः
परित्रस्ता येभ्यः[2] सूरगुरुमुखावादिकरिणः ॥ ९१ ॥

**कृष्णः**—आर्य ! किं बहुवर्णितेनास्य नगरस्य—

अग्रे तौर्यत्रिकविलसितं पृष्ठतश्चेन्द्रजालं
वामे नाना प्रधनविभवो दक्षिणे शिल्पसंपत् ।
आस्तामन्यत्सकृदपि पदं नेत्रयोः श्रोत्रयोर्वा
यद्येतस्मात्किमपि जगतः सारमन्यन्न विद्मः ॥ ९२ ॥

**( नेपथ्ये )**

दिग्दन्तावलगर्वखर्वणपटो दम्भोलिपाणेर्बलद्
दम्भस्तम्भनमन्त्रकंसनृपतेर्दोर्दर्प्पकल्पद्रुम ! ।
ध्वानोद्धूनितविश्वमण्डलभटाडम्बर्यकान्तस्तुति-
र्नन्दस्यैष तु डिम्भकः कुवलयापीडावधेयः परैः ॥ ९३ ॥

---

१. 'प्रकर' इति मूले पाठः । २. मूले 'भ्यः ये' इति व्यत्यस्ताक्षरः पाठः ।

**सर्वे**—( **श्रुतिमभिनीय सचकितमन्योन्यम्** ) प्रायः सन्निहितः कंसनृपतेः प्रतीहारविहारप्रदेशः, यत्कुवलयापीडं कुम्भोन्द्रं कश्चिदुत्तम्भयति। तद्विलोकन-योग्य एवासौ। ( **इति सोत्साहमुपसर्पन्ति** )।

( **पुनर्नेपथ्ये** )

नित्यं यत्कपटं स्फुटं घटयता रे दर्प्पशौण्ड त्त्वया
ते ते भोजपतेः कलेवरसमा नीता दशां तादृशीम्।
यत्कोदण्डमखण्डि[1]खण्डपरशोर्यद्ध्वंसितश्चाध्वर-(त्वं)[2]
स्तत्तत्कर्मफलाप्तये कथमसौ कुम्भो न संभाष्यते॥ ९४॥

**सर्वे**—( **श्रुतिमभिनीय साटोपम्** ) हंहो! सत्यमात्थ, यदस्मिन्निहते कंस-विध्वंसनरूपं फलमनायासेन लप्स्यते।

**नट[3]कृष्णः**—( **साटोपमुच्चैः** ) अरे! 'संभाष्यते' इति कथम्? 'संहार्यते' इत्युच्यताम्, पश्य तथैवाहं करवाणि। ( **इति सत्वरं निष्क्रान्तः** )।

**नट[4]बलः**—भो भोः सखायः! भवन्तः क्षणमिहैव नौ प्रतीक्षन्ताम्। पश्यामि कोपात्किमयं चेष्टते। ( **इति सत्वरं तमनुगच्छन्निष्क्रान्तः** )।

**सहचराः**—( **सभयकुतूहलं परितोऽवलोकयन्ति** )।

( **ततः प्रविशति महामात्रेणोत्तम्भितः कुवलयापीडः** )

**कुवलयापीडः**—( **कृष्णमन्वेषयन् परितः पराक्रमं नाटयति** )।

**महामात्रः**—( **पुरोऽवलोक्य साटोपमुच्चैः** ), ( **'नित्यं यत्कपटमित्यादि" पठित्वा** ) अरे रे! क्व पलायसे? क्व पलायसे? ( **इति करिणं प्रेरयन् स्वजनान् परितोऽवलोक्य** ) भो भोः! किमिति चिन्त्यते—

रङ्गद्वारे यदि कुवलयापोडनामा स कश्चित्
चाणूरश्च प्रलयहुतभुङ् मुष्टिको दर्पधृष्टः।
कंसः कंसः स्वयमसिधरः स्वीयसिंहासनस्थः
कालग्रस्तः ( **इत्य[5]र्धोक्ते आकाशे** ) भद्रं भद्रं,
तदिह सखलो नन्दतां नन्दसूनुः॥ ९५॥

---

१ 'मखण्डमर्धपरशो' रिति मूलेऽपपाठः।
२. 'त्वं' इति कोष्ठान्तर्गतो मूलेऽधिकः।
३-४. मूले "नट" इति नास्ति।
५. मूले तु 'इत्युक्ते' एतावदेव पाठः।

**महामात्रः**—( **ऊर्ध्वमवलोक्य** ) रे रे दुराशापिशाचीग्रस्ताः 'स्वर्गस्थाः ! "**मन्दधीर्नन्दसूनुः**" इति पठ्यताम् । ( **नेपथ्ये** ) अहो आश्चर्यम् ! आश्चर्यम् !!

कंसः कथं वा स बिभर्ति गर्वमाधोरणेनाथ मतङ्गजेन ।
याभ्यां प्रतीपेऽद्भवति सिंहनादं द्रागेव गोमायुदशा प्रपेदे ॥ ९६ ॥

**महामात्रः**—( **भ्रुतिमभिनीय सामर्षहासम्** ) आः पाप आभीरापसद ! स्वीयनिभृतसंचारचातुर्यमस्मासु संचारयसि ? भवतु, तावदचिरेणैतत्फलं लप्स्यसे । ( **इति तमुद्दिश्य निष्क्रान्तः** ) ।

**सखायः**—( **नेपथ्याभिमुखमवलोक्य ससंभ्रममन्योन्यम्** ) पश्यत पश्यत—

तिर्यक् स्तब्धविलोचनार्द्धमलघुप्रस्यन्दिदानद्रवं
किञ्चित्कूणितकन्धरं नतशिरः पिण्डाभशुण्डाग्रकम् ।
चण्डाटोपविषाणकोटिरटनास्फोटत्रुटद्विष्टपं
कष्टं पेष्टुमना हरिं कुवलयापीडः स्फुटं चेष्टते ॥ ९७ ॥

( **इति निस्पन्दमालोकयन्ति** ) ।

( **पुनर्नेपथ्ये कलकलः** )

**सर्वे**— ( **समाकर्ण्यावलोक्य च सानन्दम्** )—

शुण्डादण्डविघट्टिना करटिनाकृष्टोऽमुना कैटभ-
द्वेष्टोच्चैः शतकोटिनिष्ठुरकटौ रुष्टोऽतुदन्मुष्टिना ।
सोऽप्याघूर्णशिराश्चिरात्कटुरटन् व्याघुट्य तं स्फोटय-
न्नुत्पाट्यान्तकदन्तखण्डनरदं तेनासुभिः खण्डितः ॥ ९८ ॥

( **इति हर्षं नाटयन्ति** ) । ( **नेपथ्याभिमुखमवलोक्य** ) अहो चित्रम् !

द्विरदवरमदासृक् स्वेदधाराञ्चिताङ्गा-
भरणवसनवेशौ तद्विषाणाङ्कितांसौ ।
शितिसितमणिभूभृद्धातुरागेन्दुरत्ना-
ङ्कुरकिरणकदम्बं विन्दतः[१] कृष्णरामौ ॥ ९९ ॥

( **इति सानुरागं निर्वर्ण्य परस्परम्** )—

जम्भभेदिमणिदम्भभेदिना[२] जृम्भमाणमहसोपसंभृतैः ।
स्वेददन्तिमदरक्तबिन्दुभिः कं न नन्दयति नन्दनन्दनः ॥ १०० ॥

---

१. 'विन्दथः' इति मूले पाठोऽसंगतः ।
२. 'भेदिनो' इति मूलपाठो न संगतः ।

**आकाशे**—"कंसं निहतवान् कृष्णः"

**( सर्वे श्रुतिमभिनीय हर्षं नाटयन्ति, पुनस्तत्रैवान्यः )**—

तमद्य द्विपनायकम् ।
यस्मिन् भोजपतेः प्रीतिः प्राणेभ्योऽपि गरीयसी ॥ १०१ ॥

**( ततः प्रविशतो यथानिर्दिष्टौ नट[1]रामकृष्णौ )**

**गोप्यः**—**( साद्भुतप्रणयं संस्कृतमाश्रित्य )**—

प्रियतम ! भवतः कतिधा कति वा नास्वादिताः शोभाः ।
ईदृशि तथापि तृप्तिर्न भवति मनसो दृशोश्चापि ॥ १०२ ॥

**( नेपथ्ये साटोपम् )** भो भोः श्रूयताम्—

मां गीर्व्वाणमुनिर्यदाह सदयो देवः स दैत्यान्तकः
प्राग्वैरी तव नन्दसद्मनि तथैवास्याखिलं लक्ष्यते ।
तच्चाणूरममाक्षिलक्षितपथे मद्राष्ट्रहृत्कण्टकः
सज्ज्येष्ठः कपटैकसंगरपटुर्मल्लैरयं हन्यताम् ॥ १०३ ॥

**बलः**—**( श्रुतिमभिनीय साट्टहासं बाहुमूले करास्फोटनं कृत्वा आकाशे लक्ष्यं बद्ध्वा )**—

गतः कंसो ध्वंसं सह परिजनैरद्य सहसा
जरासन्धोऽप्यन्धः स्वयमदितयोऽसौ दुहितरौ ।
तथा बाणक्षोणीसुतयवनशाल्वाश्च यदमी
वलत्प्रेमाणोऽस्मिन् कलय बलदेवोऽस्मि पुरतः ॥ १०४ ॥

**( दशनैरधरं संदश्य )**—

भिन्ना एव कुलाचला विशसि चेत्तत्कन्दरामन्दिरा-
ण्यम्भोधिष्वपि नाम्भसः स्थितिरभूत्तत्रापि चेन्मज्जसि ।
स्वर्गं वाथ रसातलं व्रजसि चेद्ध्वस्ते ततस्ते जग-
त्यास्तां कस्तव रक्षणे मम पुरस्तात्कं सशंस स्वयम् ॥ १०५ ॥

**( इति कोपाटोपं नाटयति )**

**कृष्णः**—**(ससंभ्रममुत्थाय)** आर्य ! नृत्यमेतत् नृत्यमेतत् **( सर्वे हसन्ति )** ।

**नेपथ्ये**—भो भोः ! समाकलयन्तु । नाकालया वराका मह्यं द्रुह्यन्तः किं नाम कुर्युः । यतः—

---

१. मूले 'नट' इति नास्ति ।

वृत्रघ्ना विनिवर्तिता जलधरा मद्राष्ट्रतो वृष्टितः
किं दृष्टा मम मार्गणैर्न दलिताः कामं ददानाः पयः ।
किं चासौ विबुधैः समेत्य कतिधा युद्धप्रहरणोद्धुर-
श्चण्डोद्धूलितफुल्लकिंशुकदशां नालम्भि मत्सायकैः ॥१०६॥

**अपि च**—आस्तां तावद् गीर्वाणान्तरप्रस्तावः ।

दोर्दर्पं प्रमथाधिपस्य जगति प्रख्याति भिक्षाटनं
किं वा नाम्बुजसंभवस्य विदितं वीर्यं तपश्चर्यया ।
यस्तूच्चैर्मधुकैटभप्रशमनः सर्वैः समुद्घुष्यते
बोद्धव्यं रणदुर्मदः स च मया दृष्टः कथं चेष्टते ॥ १०७ ॥

**नटकृष्णः**—(**श्रुतिमभिनीय समन्दस्मितम् आकाशे लक्षं बद्ध्वा**) रे रे भोजसजकुलाङ्गारदुर्बुद्धे !

यत्साधूंस्तुदसि स्वधर्मनिरतान् यद्बाधसे यादवान्
यद्देवानुपमर्दयस्यनुपदं यद्वर्धयस्युत्पथान् ।
यच्चास्मत्पितरौ तथा स्वपितरं बध्नासि कं साचिरात्
तत्तत्कर्मतरोरवाप्स्यसि फलं स्याश्चेद् दृशोर्गोचरः ॥१०८।

( **इति सोत्साहं रङ्गप्रवेशं नाटयति** )

( **ततः प्रविशति मञ्चारूढो भोजराजः** )

( **पुरतो दिदृक्षवः पौरजनजानपदाः, अविदूरे वसुदेवदेवक्यौ च** )

**चाणूरः**—( **पुरतो नटरामकृष्णौ विलोक्य सानन्दम्** ) भो भोः कृष्ण ! श्रूयताम्—

श्लोकं कंचनसंचय[१]न्नसि चिरादापूतना स्वर्गते-
राभोजेन्द्रकरीन्द्रदर्पदलनं कैस्त्वं न संभाव्यसे ।
तेन स्वर्गमुपैहि सूर्यसुषिरेणोद्दामदोर्दर्प्प भो-
श्चाणूरोऽस्मि चिरेण पुण्यनिचयैर्दृष्टोऽसि तिष्ठ क्षणम् ॥१०९॥

**अपि च**—भो भो युद्धधुरन्धर ! त्वं चाकर्णय—

त्रिभुवनबलभिद्ध्वनिः प्रलम्बो यदवधि बन्धुयुतः खरासुरश्च ।
बल तव तदलं यशोऽपि कष्टं रणमनुतिष्ठसि चेन्न मुष्टिकेन ॥११०॥

**नटकृष्णः**—( **सानुनयस्मितम्** )

---

१. 'संचरन्नसि' इति मूले पाठः ।

भोजेन्द्रस्य भुजाबलं त्रिभुवने जाग्रद्भवन्तावतः
को मल्लः प्रतिमल्लतां व्रजतु वां कालं विलोक्यान्तिके ।
भोश्चाणूर नियुद्धताण्डवपटो भो मुष्टिकेष्टं हि नौ
युद्धं तद्यदि सौष्ठवानि कुशलैर्बोध्या वयं डिम्भकाः ॥१११॥

**चाणूरः**—( **विहस्य** ) अहो डिम्भता भवतोस्तावद्विज्ञातैव, पुनर्पुनः शिक्षायां यद्यपेक्षा स्यात्तदा वां शिक्षयावहे । ( **इति सत्वरं परिकरं बद्ध्वा नियुद्धोचितवेशमुद्दिश्य समुष्टिको निष्क्रान्तः** ) ।

**नटकृष्णः**—आर्य ! आज्ञाप्रतिपालनेन राज्ञो हितमेव संपादयामः, यदर्थं वयमाहूताः । ( **इति चाणूरमुष्टिकावुद्दिश्य निष्क्रान्तौ** ) ।

**सभासदः**—( **नेपथ्याभिमुखमवलोक्य** ) अहो ! महदसमञ्जसम् ।

दम्भोलिदम्भदलनोद्धुरनिष्ठुराङ्ग-
श्चाणूर एष सुपटुर्युधि मुष्टिकश्च ।
आभ्यां युधार्पितधुरं वहतां किमेतौ
हा धिक् शिरीषसुकुमारतरौ किशोरौ ॥ ११२ ॥

( **नेपथ्ये कलकलः** )

**सर्वे**—( **ससंभ्रममवलोक्य परस्परम्** ) अहो किमिदम् ?

परस्परविमर्दनोड्डमरकायकाण्डोच्छल-
च्चटच्चटदिति स्फुटध्वनितनिर्जितस्फूर्जथुः ।
अलक्षितगतागतप्रपतनोत्प्रपातक्रमा-
क्रमः स्फुरति संगरः कलय कृष्णचाणूरयोः ॥ ११३ ॥

( **पुनर्नेपथ्याभिमुखमवलोक्य** ) अहो अतिचित्रमेतत् ।

वक्षः कपाटभुजदण्डललाटपट्ट-
प्रस्फोटनप्रकटितोत्कटमुष्टिघातम् ।
अन्योन्यकष्टपरिपिष्टविघट्टिताङ्गं
रङ्गः प्रलम्बरिपुमुष्टिकयोश्चकास्ति ॥ ११४ ॥

( **नेपथ्ये** ) हतोऽसि रे हतोऽसि ।

**वसुदेवदेवक्यौ**—( **श्रुतिमभिनीय सकरुणम्** ) हा कष्टम् !

प्रागावयोर्निहतवान् हतयोः सुतान् षड्
धातुः शठस्य घटनान्नृपतिर्नृशंसः।
हा वत्स कृष्णबलदेवनियुद्धमध्ये
किं वा विधास्यति स वामपि नष्टचेष्टः॥ ११५॥

( नेपथ्ये भूपृष्ठे निष्ठुरष्ठात्कारः )

**सर्वे**—( श्रुतिमभिनीय ससाध्वसम् ) आः किमेतत् ? (आकाशे कर्णं दत्त्वा) किं ब्रूत ?

शिरीषसोदराङ्गेन वज्रपृष्ठातिनिष्ठुरः।
हतः कृष्णेन चाणूरो बलदेवेन मुष्टिकः॥ ११६॥

( इति हर्षं नाटयन्ति )

**कंसः**—( सक्रोधम् ऊर्ध्वमवलोक्य ) हंहो वराका नाकालयाः ! किं विपरीतं प्रलपथ ? "चाणूरेण हतः कृष्णो मुष्टिकेन हलायुधः" इति भण्यताम्। तिष्ठत रे तिष्ठत।

( प्रविश्य पटीक्षेपेण विजयमहोज्वलौ )

**नटराम[1]कृष्णौ**—( सखिभिः समं नृत्यमभिनयतः सर्वे गायकवादकाश्च तत्समयोचितमाचरन्ति )।

**सभासदः**—केचित् ( सनिदिध्यासनम् )

सजातीयविजातीयस्वगतद्वैतवर्जितम्।
यद्ब्रह्मोपनिषद्वेद्यं तद्धामेदं विराजते॥ ११७॥

**अन्ये**—( सतर्कपरामर्शम् )—

जन्यप्रयत्नाजन्यानां जन्यानां समवायिनाम्।
कर्ता धर्ताऽथ संहर्ता योऽनुमेयः स राजते॥ ११८॥

**अपरे**—( सानन्दानुभवाभिनयम् )—

न क्लेशैः कर्मभिर्वापि न विपाकैर्न वाशयैः।
यः परामृश्यते कश्चित्तं नमस्कुर्महे पुरः॥ ११९॥

**इतरे**—( समीमांसनम् )—

शंसन्त्येनं मन्त्रमयं मीमांसाजयमांसलाः।
सांख्यसंख्यावतामस्मिन्नादिविद्वानिति ध्वनिः॥ १२०॥

---

१. मूले "रामकृष्णौ" इत्येव पाठः।

**अपरे**—( **सचमत्काररोमाञ्चम्** )—

याज्ञिका यज्ञपुरुषं वैष्णवाः पुरुषोत्तमम् ।
निरावरणमप्येनं संगिरन्ते दिगम्बराः ॥ १२१ ॥

**केचित्**—( **सात्मश्लाघम्**[1] )—

लोकवेदविरुद्धैरप्यलिप्तः कामकर्मभिः ।
अस्मत्तन्त्रे स्वतन्त्रो यः स पशूनामसौ पतिः ॥ १२२ ॥

**केचन**—( **सप्रत्यभिज्ञम्** )—

शिवः शैवैर्विश्वकर्मा शिल्पकल्पितजीवनैः ।
सर्वज्ञश्चैष विज्ञेयः सौगतागमकोविदैः ॥ १२३ ॥

**अन्ये**—( **सस्निग्धापाङ्गतरङ्गितम्** )—

शरच्चन्द्रस्फुरद्रोचिः शोणराजीवलोचनः ।
वसुन्धराया धर्ता यमनन्तः शब्द्यते बुधैः ॥ १२४ ॥

**पुराङ्गनाः**—( **सपुलकाह्लादम्** )—

सिंहसंहननो योऽसौ श्यामतामरसद्युतिः ।
एष गोपालबालानां लीलापञ्जरखञ्जनः ॥ १२५ ॥

**अन्याः**—अहो ! व्रजसुभ्रुवां भाग्यातिशयः केन वर्ण्यताम् । यतः—

लावण्येन मनोभवस्य कलया सौन्दर्यमर्यादया
प्रख्याताः कति नेह गोपसुदृशां त्वन्यैव काचित्कथा ।
दुग्धाब्धेः सुतयार्च्यमानचरणद्वन्द्वोऽपि यासां हरि-
र्लीलापाङ्गतरङ्गितेन नितरां क्रीडाकुरङ्गीकृतः ॥ १२६ ॥

**कंसः**—( **सक्रोधम्** ) कः कोऽत्र भोः ?

निस्सारयत दुर्वृत्तौ वसुदेवात्मजौ पुरात् ।
धनं हरत गोपानां नन्दं बध्नीत दुर्मतिम् ॥ १२७ ॥

**सर्वे**—( **अनाकर्णितकं नाटयित्वा स्वस्वकर्मणि रज्यन्ति** ) ।

**कंसः**—( **सक्रोधम्** ) भो भोः सदन्तक–देवान्तक–कङ्कन्यग्रोधादयः !

---

१. 'घ्यं' इति मूले पाठः ।

तूर्याणि कार्यरहितानि निवर्तयध्व-
मेतौ द्विषौ परिजनैः सह घातयध्वम् ।
वृद्धः पिताऽप्यरिसमृद्धिविवृद्धबुद्धि-
र्लुब्धो यथा श्वसिति नाद्य तथाविधद्ध्वम्[१] ॥ १२८ ॥

( इति कोपाटोपं नाटयति )

सभासदः—( समाकर्ण्य जनान्तिकम् सरोमाञ्चम् —

नरवादित्रनिर्घोषे निवृत्ते कंसशासनात् ।
जयन्ति देववाद्यानि कृष्णे पुष्णाति ताण्डवम् ॥ १२९ ॥

कंसः—( ऊर्ध्वमवलोक्य ) आः पापिष्ठादिविष्ठाः तिष्ठत ।

नटबलः—( सपाणिनिष्पेषं नाटयन् ) अये !

वत्स त्वया प्रतिज्ञातं हन्तव्योऽयं मयेति यत् ।
सह्यन्ते तेन दुर्बुद्धेरस्येमाः कटुकोक्तयः ॥ १३० ॥

नटकृष्णः—( सामर्षम् )

आः पाप भोजकुलपांसुलकंस शंस-
स्यद्यापि निष्ठुरमधिष्ठितराजगर्वः ।
केशे प्रगृह्य विनिपात्य च राजमञ्चात्
त्वां चूर्णयामि कलयैष बलानुजोऽस्मि ॥ १३१ ॥

( इति सत्वरमुत्प्लुत्य मञ्चमारोहति )

कंसः—( सरोषाट्टहासम् ) रे रे दुरहंकारोद्दण्डभण्डागाराभीरडिम्भ ! साधु साधु, एह्येहि, ( इति भुजदण्डमुन्नमय्य )—

दोर्मित्र खर्वयसि सर्वसुपर्वगर्वं
शर्वस्य शूलमपि चर्वयितुं समर्थः ।
विद्विड्वधूषु विधवात्वविधानविद्वन्
विद्विट्कथं तव पुरः पृथुकः सदर्प्पः ॥ १३२ ॥

(पुनः कृष्णम्प्रति ) आः पाप दुरवलेपान्ध ! क्षुत्परवशकीनाशहस्तमोदकायमानमस्तक ! मदोत्तम्भसंभावनोद्धतमेनं किं नाकलयसि ?

---

१. 'वितध्वं' इति मूले त्वपपाठः ।

सुरकरटिघटोद्यत्प्रोद्भटाटोपदीव्यद्
विकटकटकरोटी कूटकूटैकटङ्कः ।
प्रकटितशतकोटित्रोटितद्विड्विडौजः
स्फुटमदभटकण्ठा कुण्ठनाट्योऽसिरेषः ॥ १३३ ॥

(इति सत्वरमसिचर्मणी प्रगृह्य अम्बरमवलम्बते । कृष्णस्तमनुगच्छन्निष्क्रान्तः)।

( नेपथ्ये सकरुणम् )

यद्द्वारि दौवारिकपादमूले लुठत्किरीटः शतकोटिपाणिः ।
स एष धूलीषु लुठन् पदान्तं गोपालडिम्भस्य रिपोरुपास्ते ॥ १३४ ॥

अपि च—

दोर्दर्प्पेण क्षुभितमकरग्राहनक्रादियादः
स्तोमं रत्नाकरमभिभवन् योऽग्रहीद्रत्नजातम् ।
यक्षाध्यक्षादहरत निधीनार्द्दयत् सर्वदेवान्
सोऽयं कंसः शिव-शिवशिशोः क्रीडया कीर्तिशेषः ॥ १३५ ॥

( सर्वे हृषं नाटयन्ति । आकाशे दुन्दुभिध्वनिः । पुनस्तत्रैव )

यज्वानोऽध्वरधर्मधर्षणभयं देव्यो वियोगं प्रियै—
र्दिक्पालाः प्रपलायनं क्रतुभुजः क्षुत्क्षामतामुज्झत ।
दैन्यं देवपुरक्षिते धृतिर्हार्ति संक्रन्दनक्रन्दनं
किं नो मुञ्चसि केनचिद्घनरुचा कंशोऽद्य विध्वंसितः ॥१३६॥

( ततः प्रविशति विजयमहोज्वलः नटश्रीकृष्णः )

नटश्री[1]कृष्णः—आर्य ! निष्पादितः श्रीमच्चरणेन समाज्ञातोऽर्थः । (इति सविनयप्रणयं प्रणमति )।

नटबलः—( सपुलककम्पमङ्कमानीय गाढं समालिङ्ग्य सगद्गदास्रम् ); अये वत्स !

ध्वंसिताः सपदि विद्विषः
कृता निर्जराश्च सुहृदश्च विज्वराः ।
आर्ययोः पदयुगं नमस्कृतं
किं विधेयमधुना विचार्यताम् ॥ १३७ ॥

सखायः—(बलद्रोमाञ्चस्फुरद्वदनम् ) भोः प्रियवयस्य बलदेव !

१. मू० पु० 'नट' इति नास्ति ।

समाकर्ण्यतामधुना यदुचितम्—

देवदुन्दुभिनिध्वानभरोड्डमरडिण्डिमैः ।
समन्तान्मण्डलीभूय ताण्डवं मण्डयामहे ॥ १३८ ॥

( इति सर्वे कृष्णं समालिङ्ग्य तथाकुर्वन्ति )

**भद्रमुखः**—( साट्टहासकपटकोपाटोपस्फुरद्वदनम् ) भो भो विवेअविधुरा ! मएज्जेव वावादिदा एदे वइरिणो । कधं मं उज्झिअ कण्होज्जेव समालिंगीअदि पसंसीअदि च । ( भो भो विवेकविधुरा ! मयैव व्यापादिता एते वैरिणः । कथं मामुज्झित्वा कृष्ण एव समालिङ्ग्यते प्रशंस्यते च ) ।

**सर्वे**—( सहासम् ) सखे ! सत्यं ब्रवीषि । ( इति करतलेन तदङ्गान्यामृशन्ति ) ।

**नटकृष्णः**—( सविमर्शविनयम् ) आर्य !

अराजकं हृतं राज्यं वदन्तीदं पुराविदः ।
अतः को वा भवेद्राजा मधुपुर्यां विचार्यताम् ॥ १३९ ॥

**भगवन्तौ रामकृष्णौ**—हंहो संगीततन्त्रपारङ्गमाः ! सांप्रतमुग्रसेनाभिषेकनाटकस्याभिनयाय साभिलाषाः संलक्ष्यन्ते भवन्तः । तदद्य विरमतु, कालान्तरे विलोकयिष्यामः ।

**सर्वे**—( कृताञ्जलिपुटाः सविनयनमत्कन्धरम् ) यथाज्ञाप्यते किङ्करेषु ।

**श्रीकृष्णः**—( सानुकम्पम् ) वदन्तु किमभिलषितं भवतामस्मत्तः । प्रबन्धकर्तुर्वा भगवतो नारदस्य ।

**सर्वे**—भगवन् !

सन्तः सन्तु निरापदस्तव पदद्वन्द्वे सदास्तां रति-
र्माभूत् कश्चनमत्सरः परगुणैर्नन्दन्तु सारग्रहाः ।
कुर्यासुः कवितास्वनर्गलधियश्चित्रान् प्रबन्धानमून्
भूयांसो विनयन्तु नाट्यकुशलाः पुष्णन्तु विज्ञाश्च तान् ॥१४०॥

( इति सर्वे नटपरिवेशं[1] परित्यज्य स्ववेषधराः प्रणमन्ति )

**गोप्यो गोपाश्चान्येऽपि द्रष्टारः**—अहो चित्रं चित्रम् ! अमी सुन्य[2] एव ।

---

१. 'प्रवेश' इति तु मूले । २. 'सुनय' इति मूले पाठः । 'सुनी' शब्दाज्जसि 'एरनेकाच' इति यणि 'सुन्य' इति तूचितः ।

अहो वाद्यमहो गीतमहो नटनपाटवम्।
अहो कृष्णस्य सौभाग्यमहो देवर्षिकौशलम् ॥ १४१ ॥

( इति स्तुवन्ति )।

( ततः प्रविशत्यपटीक्षेपेण नारदः )

सर्वे—( ससंभ्रममुत्थाय प्रणमन्ति )।

भगवन्तौ कृष्णरामौ—( विलोक्य सत्वरम् ) अये आसनम्। ( इति सिंहासनादवतीर्य प्रणमतः )।

नारदः—( सरोमाञ्चं सहासम् ) भो भोः कीदृशमिदमवलोकितं नृत्यम्?

कृष्णरामौ—भगवन् कथं ब्रूमः। यदिक्षुक्षीरमाक्षिकादिमाधुर्यवद्रसज्ञानुभवैकसाक्षिकं हि तत्।

नारदः—( सप्रमोदम् ) कः प्रसादो मह्यं प्रदेयः।

कृष्णरामौ—यद्रोचते भवते।

नारदः—( सपुलकगद्गदाश्रमञ्जलिं बद्ध्वा ) भगवन्!

भूयांसः कविराजहंसतरुणास्त्वत्केलिकल्लोलिनी
क्रीडद्वाग्वरटा दधत्त्वभिरतिं सन्मानसाम्भोरुहे।
सन्तस्तान् गमयन्तु कीर्तिसरसीं सम्पन्मृणालावलीं
तेषां प्रेमफलेन कंसदलन त्वं वर्द्धयाशालताम् ॥ १४२ ॥

( इति दण्डवत्प्रणमति )।

कृष्णरामौ—( साकुण्ठनम् ) भगवन् किमिदम्? ( इति ससंभ्रममुत्थाप्य ) भवतु तथा यथाभिलषितमत्रभवतः।

( इति निष्क्रान्ताः सर्वे )

॥ इति कंसविध्वंसनो नाम सप्तमोऽङ्कः ॥

॥ इति श्रीपरमहंसपरिव्राजकाचार्य श्रीमधुसूदन-सरस्वती-
विरचितं कृष्णकुतूहलं नाम नाटकं समाप्तम् ॥

।। श्रीनृसिंहो जयतितराम् ।।

।। संवत् १७६ समये[१] विलम्बिसंवत्सरे-आश्विने मासि विजयदशमीदिने
नृसिंहोपासकसामराजपण्डितानां सूनुना ढुंढिराजेन
माधवपण्डितानुजेन लिखितमेतत् ।।



१. अत्र "संवत् १७६६ समये विलम्बिसंवत्सरे" इत्येवं लेख उचितः। १७६६ तमे विक्रमवत्सरे ज्यौतिषशास्त्रीयनियमानुसारेण विलम्बिनाम्नः संवत्सरस्य संभवात्। स्पष्टीकृतं चैतत्प्राक्कथने मयेति।

## अथाकारादिक्रमेण श्लोकानुक्रमणिका

प

